# अथ दशमोऽध्यायः

आह–आस्रवदोपानवलिप्तस्व परिस्पन्दवतोऽपि कुशलस्य कर्मागमद्वारसंवरणादित्युपपादितः संवरपदार्थः, तदनन्तरनिर्देशभाविनी निर्जराऽभिधीयतामिति ? अत्र ब्रूमः–नासाविह पुनर्वक्तव्या । कुतः ? तपोऽनुभवसंबन्धेन[1] यस्मात्पुरैव [2]व्याख्याता । यथानामोपभुक्तविचित्रफलकर्मनिवृत्तिर्निर्जरा । तत्रा[3]नवसरप्राप्तेति चेत्; न; [4]अर्थवशाच्छास्त्रगरीयस्त्वपरिहारार्थत्वाच्च । [5]संवरानन्तरनिर्देशार्हेति चेत्; तथैवाभिहिता "तपसा निर्जरा च" [ ९।३ ] इति । अत एव गुप्त्याद्यवसानम्, इतरथा हि उभयहेतुत्वविपर्ययेण यत्र क्वचनाभिधानं स्यात् ।

आह–प्रक्लृप्ता निर्जरा, मोक्षोऽभिधातव्यः । स चानुपसम्प्राप्तकेवलज्ञानावस्थस्य नोपपद्यते इति अतः केवलज्ञानमेव तावद्यथा भवति तथोपदेष्टव्यमिति ? उच्यते, नैतदपि भूयो निर्देशार्हं[6] वेदितव्यम् । कुतः ? यस्माद्ध्यानप्रकरणे व्याख्यातम्—

## मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥ १ ॥ इति ।

अथवा, "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" [ १।१ ] इत्युपक्षिप्य लक्षणोत्पत्तिविषयनिबन्धनादिभिर्विशेषैर्दर्शनचारित्रे समर्थिते, ज्ञानं च प्रमाणस्वभावं पञ्चविधमभ्युपेत्य तत्र चतुष्टयस्य लक्षणोत्पत्तिहेतुविषयनिबन्धाः प्रक्रान्ताः, अतः परमिदं वक्तव्यम्–एवमुत्पद्यते केवलमिति ? अत्र ब्रूमः–न वक्तव्यं पुनः, यस्मात् पुरस्तदेव व्याख्यातम्, संवरनिरुपादानीकृतसन्ततिचारित्रध्यानाग्निप्रज्वलितेन्धनमोहक्षयात् ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् । किम् ? उत्पद्यत इत्युपदिष्टमिति[7] वाक्यशेषः ।

वृत्तिप्रसङ्गो लघ्वर्थमिति चेत्, न, क्रमेण क्षयज्ञापनार्थत्वात् ।१। स्यान्मतम्–इह वृत्त्या निर्देशः कर्तव्यः मोहज्ञानदर्शनावरणान्तरायक्षयात्केवलमिति । किमर्थः ? लघ्वर्थमिति, तन्न, किं कारणम् ? क्रमेण क्षयज्ञापनार्थत्वात् । प्रागेव मोहक्षयमुपनीयान्तर्मुहूर्तं क्षीणकषायव्यपदेशमवाप्य ततो युगपद् ज्ञानदर्शनावरणान्तरायाणां क्षयं कृत्वा केवलमवाप्नोति ।

तत्क्षयहेतुः केवलोत्पत्तिरिति हेतुलक्षणविभक्तिनिर्देशः ।२। तत्क्षयः केवलज्ञानोत्पत्तेर्हेतुरिति कृत्वा तदभिसंबन्धावद्योतिकया हेतुलक्षणया विभक्त्या निर्देशः क्रियते ।

तत्क्षयः प्रणिधानविशेषात् ।३। तेषां मोहादीनां क्षयो भवति । कुतः ? प्रणिधानविशेषात्, परिणामविशेषादिति यावत् । तद्यथा–[8]पूर्वाहितेन विधिना परमतपोविशेषैः प्रशस्ताध्यवसायप्रकर्षात् विशुद्ध्यतः[9] शुभाभिमताः प्रकृतयः स्फीतीभवन्ति, अप्रशस्ताश्च तनूभूय विलीयन्ते । तत्र कश्चिद्वेदकसम्यग्दृष्टिरप्रमत्तगुणस्थाने सप्तप्रकृत्युपशमात् श्रेण्यारोहणाभिमुखश्चारित्रमोहमुपशमयितुमारभते । अपरः असंयतसम्यग्दृष्टिसंयतासंयतप्रमत्तसंयताप्रमत्तसंयतगुणस्थानेषु [10]कस्मिंश्चित्

---

१ तपःसम्बन्धेन अनुभवसम्बन्धेन चेत्यर्थः । अनुभवसम्बन्धेन–श्र० टि० । २ तपसा निर्जरा चेत्यत्र विपाकोऽनुभवः स यथानाम ततश्च निर्जरेत्यत्र च व्याख्याता–श्र० टि० । ३ तत्रानुभव संप्राप्त इति मु०, द०, ब० । तत्रा नुभवं सप्राप्त इति–ज० । ४ प्रयोजन–श्र० टि० । ५ यत एव संवरानन्तर निर्देशार्हत्वं तस्मादेव गुप्त्यादिसूत्रावसाने व्याख्याता सगुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः तपसा निर्जरा चेति वीचारोऽर्थव्यञ्जनयोगसंक्रान्तिरिति सूत्रव्याख्यानावसरे द्रष्टव्यम्–श्र० टि० । ६ ध्यानप्रकरणे–श्र० टि० । ७ 'सम्यग्दृष्टिश्रावक' इत्यादिसूत्रस्य व्याख्यानावसरे दुर्लभपरम्परविधानेन–श्र० टि० । ८ अनुभागेन–श्र० टि० । ९ पुस–श्र० टि० । १० गुणस्थाने–श्र० टि० ।

सप्तकर्मप्रकृतीः क्षयमुपनीय क्षायिकसम्यग्दृष्टिर्भूत्वा चारित्रमोहमुपशमयितुमुपक्रमते। ततोऽथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं च कृत्वा उपशमकश्रेणिमारुह्यापूर्वकरणोपशमकगुणस्थानव्यपदेशमनुभूय तत्राभिनवशुभाभिसन्धितनूकृतपापकर्मप्रकृतिस्थित्यनुभागः विवर्द्धितशुभकर्मानुभवः अनिवृत्तिवादरसाम्परायोपशमकगुणस्थानमधिरुह्य नपुंसकवेदस्त्रीवेदनोकषायषट्कपुंवेदाप्रत्याख्या-
५ नक्रोधद्वयमायाद्वयलोभद्वयक्रोधमानसंज्वलनसंज्ञिकाः प्रकृतीः क्रमेणोपशमय्य ततः सूक्ष्मसाम्परायप्रथमसमये मायासंज्वलनमुपशमं नीत्वा लोभसंज्वलनं तनूकृत्य सूक्ष्मसाम्परायोपशमकाख्यामास्कन्द्य ततः उपशान्तकषायप्रथमसमये लोभसंज्वलने चोपशमं गते सर्वमोहप्रकृत्युपशमात् उपशान्तकषायव्यपदेशभाग्भवति। आयुषः क्षयात् म्रियते। अथवा पुनरपि कषायानुदीरयन् प्रतिनिवर्त्तते। स एव वाऽन्यो वा विशुद्धाध्यवसायानुपरतोत्साहः पूर्ववत् क्षायिकसम्यग्दृष्टिर्भूत्वा
१० कर्मविशुद्ध्या महत्या विशुद्ध्यन् क्षपकश्रेणीमनुप्रपद्य[2] तैरेव करणैस्त्रिभिः पूर्ववदपूर्वकरणक्षपकतामाश्लिष्य तत ऊर्ध्वं कषायाष्टकं नष्टं कृत्वा नपुंसकवेदं नाशमापाद्य स्त्रीवेदमुन्मूल्य नोकषायषट्कं [3]पुंवेदे प्रक्षिप्य क्षपयित्वा पुंवेदं क्रोधसंज्वलने क्रोधसंज्वलनं मानसंज्वलने मानसंज्वलनं मायासंज्वलने मायासंज्वलनं च लोभसंज्वलने क्रमेण क्रमेण [4]बादरकृष्टिविभागेन विलयमुपनीय अनिवृत्तिवादरसाम्परायक्षपकभावमवाप्य लोभसंज्वलनं तनूकृत्य सूक्ष्मसाम्परायक्षपकमनुभूय
१५ निरवशेषं मोहनीयं निर्मूलकाषं कषित्वा क्षीणकषायतामधिरुह्य अवतारितमोहनीयभारः उपान्तिमे समये निद्राप्रचले प्रलयमुपनीय पञ्चानां ज्ञानावरणानां चतुर्णां दर्शनावरणानां पञ्चानामन्तरायाणां [5]चान्तमन्ते समुपगम्य तदनन्तरं ज्ञानदर्शनस्वभावं केवलपर्यायमप्रतर्क्यविभूतिविशेषं निःसपत्नमवाप्य निरुपलेपः कमलमिवामलः साक्षात्त्रिकालसर्वद्रव्यपर्यायस्वभावज्ञः सर्वत्राप्रतिहतदर्शनः अवाप्तनिरवशेषपुरुषार्थः जलधरनिरोधकालातीतस्वकिरणकलापसौम्यदर्शनस्तारकाधिप-
२० तिरिव ज्वलितमूर्तिः केवली भवति।

आह–व्याख्यातं प्रतिबन्धविनिर्मुक्तसम्यक्त्वदर्शनानन्तवीर्यसमन्वितं केवलम्, तदात्मलाभश्च सकलकर्मोच्छेदहेतुरभ्युपगत:[6]। अथ किंलक्षणः कस्माच्च हेतोर्मोक्षो भवतीत्युभयमभिधीयतामिति? अत्रोच्यते–तस्य खलु भगवतः केवलपर्यायलब्धात्मलाभस्य विग्रहवतः स्वप्रभावार्जितानन्तैश्वर्यभाजः पूर्वं दग्धकर्मचतुष्टयस्याऽप्रच्युतवेद्यनामगोत्रायुषश्च—

## २५ बन्धहेत्वभावनिर्जराभ्यां[7] कृत्स्नकर्मविप्रमोक्षो मोक्षः[8] ॥ २ ॥

मिथ्यादर्शनादिहेत्वभावादभिनवकर्मादानाभावः ।१। मिथ्यादर्शनादीनां पूर्वोक्तानां कर्मास्रवहेतूनां निरोधे[9] कारणाभावात् कार्याभाव इत्यभिनवकर्मादानाभावः।

पूर्वोदितनिर्जराहेतुसन्निधाने चार्जितकर्मनिरासः ।२। पूर्वोदितानां निर्जराहेतूनां सन्निधानेऽर्जितस्य च कर्मणो निरासो भवति। ताभ्यां बन्धहेत्वभावनिर्जराभ्यामिति हेतुलक्षणविभक्ति-
३० निर्देशः, ततो भवस्थितिहेतुसमीकृतशेषकर्मावस्थस्य युगपदात्यन्तिकः प्रत्येतव्यः [10]कृत्स्नकर्मविप्रमोक्षो मोक्षः।

---

१ वेदकसम्यग्दृष्टिः उपशमश्रेण्यनारोहको वा क्षपकश्रेण्यारूढ इत्यर्थः–श्र० टि०। २ अभिमुखो भूत्वा–श्र० टि०। ३ पुंवेदरूपेण कृत्वेत्यर्थः–श्र० टि०। ४ स्थूलकर्षण–श्र० टि०। ५ चान्तसमये स–मु०, द०, ब०, ज०, ता०, श्र०। ६ अङ्गीकृतः–श्र० टि०। ७ मोक्षः–श्र० टि०। ८ 'कृत्स्नकर्मविप्रमोक्षो मोक्षः' इति नास्ति–ता०, श्र०, मू०, ज०, ब०, द०, आ० १, २। केवलं मुद्रितप्रतावेव विद्यते। ९ विरोधिका–मु०, द०, ब०, ज०। १० ता०, श्र०, मू०, ज०, द० प्रतिषु अस्य पृथक् सूत्रत्वेनोल्लेखः।

आद्यभावादन्ताभाव[1] इति चेत्, न; दृष्टत्वादन्त्यबीजवत् ।३। स्यान्मतम्–कर्मबन्धसन्तानस्याद्यभावादन्तेनाप्यस्य न भवितव्यम्, दृष्ट[2]विपरीतकल्पनायां प्रमाणाभावादिति, तन्न; किं कारणम्? दृष्टत्वादन्त्यबीजवत्। यथा बीजाङ्कुरसन्तानेऽनादौ प्रवर्त्तमाने अन्त्यबीजमग्निनोपहताङ्कुरशक्तिकमित्यन्तोऽस्य दृष्टस्तथा मिथ्यादर्शनादिप्रत्ययसाम्परायिकसन्ततावनादौ ध्यानानलनिर्दग्धे कर्मबीजे भवाङ्कुरोत्पादाभावान्मोक्ष इति दृष्टमिदमपह्नोतुमशक्यम्। उक्तं च— ५

"दग्धे बीजे यथाऽत्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥" [ ] इति[3] ।

कृ[4]त्स्नस्य कर्मत्वेन क्षयः कर्मक्षयः, सतो द्र[5]व्यस्य द्रव्यत्वेन विनाशो नास्ति। कथं तर्हि? पर्यायेण, तस्योत्पत्तिमत्त्वाद्विनाशेन भवितव्यम्, तन्मुखेन द्रव्यमपि व्ययमुपयातीति व्यपदिश्यते। ततः पुद्गलद्रव्यस्य का[6]रणवशात् कर्मत्वपर्यायमापन्नस्य तत्प्रत्यनीकहेतुसन्निधाने त[7]त्पर्यायनिवृत्तौ तस्य क्षयः इत्युपदेशो भवतीति युक्तमेतत्–कृत्स्नकर्मक्षय इति। १०

भावसाधनो मोक्षशब्दो द्विविषयो विप्रयोगक्रियामात्रगतेः ।४। मोक्ष असने इत्यस्य मोक्षणं मोक्ष इति भावसाधनः शब्दो द्विविषयः मोक्तव्यमोचकापेक्षत्वात्। कुतः? विप्रयोगक्रियामात्रगतेः। कृत्स्नशब्देन कर्माष्टविधं सद्बन्धोदयोदीरणचतुर्विधव्यवस्थं परिगृहीतम्। तत्र बन्धोदयोदीरणानां क्षयविभागो गुणस्थानभेदेन निर्दिष्टः। सत्कर्मोच्छेदस्तु न प्रतिपादितः, स विव्रियते– १५

कर्माभावो द्विविधः–यत्नसाध्योऽयत्नसाध्यश्चेति। तत्र चरमदेहस्य नरकतिर्यग्देवायुषामभावोऽयत्नसाध्यः असत्त्वात्। यत्नसाध्य इत ऊर्ध्वमुच्यते–असंयतसम्यग्दृष्ट्यादिषु चतुर्षु गुणस्थानेषु कस्मिंश्चिदनन्तानुबन्धिक्रोधमानमायालोभमिथ्यात्वसम्यङ्मिथ्यात्वसम्यक्त्वाख्यप्रकृतिसप्तकविषतरुवनं शुभाध्यवसायनिशितपरशुपातेन निर्मूलं निच्छिद्यते। निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिनरकगतितिर्यग्गत्येकद्वित्रिचतुरिन्द्रियजातिनरकगतितिर्यग्गतिप्रायोग्यानुपूर्व्यातपोद्योतस्थावरसूक्ष्मसाधारणसंज्ञकानां षोडशानां कर्मप्रकृति पृतनासेनान्या युगपदनिवृत्तिबादरसाम्परायःस्वेन समाधिचक्रेण विजयमवाप्नोति। ततः परं कषायाष्टकं नष्टं करोति स एव युगपत्। नपुंसकवेदः स्त्रीवेदश्च क्रमेण तत्रैव क्षयमुपयाति, नोकषायषट्कं चैकेनैव प्रहारेण निपातयति। ततः पुंवेदसंज्वलनक्रोधमानमायाः क्रमेण तत्रैवात्यन्तिकं ध्वंसनमास्कन्दन्ति। लोभसंज्वलनः सूक्ष्मसाम्परायान्ते यात्यन्तम्। निद्राप्रचले क्षीणकषायवीतरागछद्मस्थस्योपान्तिमे समये प्रलयमुपव्रजतः। पञ्चानां ज्ञानावरणानां चतुर्णां दर्शनावरणानां पञ्चानामन्तरायाणां च तस्यैवान्तसमये प्रक्षयो भवति। अन्यतरवेदनीयदेवगत्यौदारिकवैक्रियिकाहारकतैजसकार्मणशरीर[8]संस्थानषडौदारिकवैक्रियिकाहारकशरीराङ्गोपाङ्गषट्संहननपञ्चप्रशस्तवर्णपञ्चाऽप्रशस्तवर्णगन्धद्वयपञ्चप्रशस्तरसपञ्चाऽप्रशस्तरसस्पर्शाष्टकदेवगतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासप्रशस्तविहायोगत्यपर्याप्तकप्रत्येकशरीरस्थिरास्थिरशुभाशुभदुर्भगसुस्वरदुःस्वरानादेयायशस्कीर्तिनिर्माणनामनीचैर्गोत्राख्या द्वासप्ततिप्रकृतयः अयोगिकेवलिन उपान्त्यसमये विनाशमुपयान्ति। अन्यतरवेदनीयमनुष्यायुर्मनुष्यगतिपञ्चेन्द्रियजातिमनुष्यगतिप्रायोग्यानुपूर्व्यत्रसबादरपर्याप्तकसुभगादेययश- २० २५ ३०

---

१ अन्तं नास्तीत्यर्थः–आ० टि०। २ यथा अनादीनामपि धर्मादिद्रव्याणामाद्यन्तकल्पनायां प्रमाणत्वाभावस्तथा अनाद्यनिधनतया अदृष्टस्य कर्मबन्ध ··· –आ० टि०। ३ तुलना–त० भा० का० १०।७।८। ४ कृत्स्नस्य कर्मणो विप्रमोक्षो मोक्ष इत्युक्त तर्हि नैवासतो जन्म सतो न नाश इति या प्रतिज्ञा सा हीयत इत्याशङ्कायामाह–आ० टि०। ५ सतो द्रव्यत्वेन–ता०। ६ मिथ्यादर्शनादि०–आ० टि०। ७ कर्मपर्याय–आ० टि०। ८–२ बन्धनपञ्चसंघातसंस्था–मु०, द०, ब०।

स्कीर्तितीर्थकरनामोच्चैर्गोत्रसंज्ञिकानां त्रयोदशानां प्रकृतीनामयोगिकेवलिनश्चरमसमये व्युच्छेदो भवति ।

आह–किमासां पौद्गलिकीनामेव द्रव्यकर्मप्रकृतीनां निरासान्मोक्षोऽवसीयत उत भावकर्मणोऽपीति ? अत्रोच्यते–

५ **औपशमिकादिभव्यत्वानां च ॥ ३ ॥**

किम् ? मोक्ष इत्यनुवर्तते ।

भव्यत्वग्रहणमन्यपारिणामिकाऽनिवृत्त्यर्थम् ।१। अन्येषां जीवत्वादीनां पारिणामिकानां मोक्षावस्थायामनिवृत्तिज्ञापनार्थं भव्यत्वग्रहणं क्रियते । तेन पारिणामिकेषु भव्यत्वस्य औपशमिकादीनां च भावानामभावान्मोक्षो भवतीत्यवगम्यते । ननु च द्रव्यनिरासेऽभिहिते तन्नि-
१० मित्तानां भावानां निवृत्तिरर्थादवगम्यत इति नार्थोऽनेन योगेन ? नैष दोषः; नायमेकान्तः– [1]'निमित्तापाये [2]नैमित्तिकानां निवृत्तिः' इति । अपि च, अर्थादवगमेऽपि सिद्धे साक्षात्प्रतिपत्त्यर्थमिदमुच्यते–विस्पष्टार्थं वक्ष्यमाणसूत्रनिर्देशार्थम् ।

आह–यद्यपवर्गो भावोपरतेः प्रतिज्ञायते, ननु चौपशमिकादिभावनिवृत्तिवत् सर्वक्षायिकनिवृत्तौ अव्यपदेशो मुक्तस्य प्राप्नोतीति; स्यादेतदेवं यदि विशेषो नोच्येत, अस्ति तु विशेष इति
१५ अपवादविधानार्थमिदमुच्यते–

**अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥**

अन्यत्रशब्दो वर्जनार्थः ।१। अन्यत्रशब्दोऽयं वर्जनार्थो द्रष्टव्यः, तन्निमित्तः सिद्धत्वेभ्य इति विभक्तिनिर्देशः, यथा–"अन्यत्र द्रोणभीष्माभ्यां सर्वे योद्धाः पराङ्मुखाः" [ ] इति ।

अन्यशब्दप्रयोगे तद्विज्ञानमिति चेत्; न, स्वार्थिकत्वात् ।२। स्यान्मतम्–अन्यशब्दप्रयोगे
२० [4]का विभक्तिर्विज्ञायते यथाऽन्यो देवदत्तादिति, अन्यत्र शब्दोऽयं तस्मान्निर्देशो नोपपद्यते इति; तन्न, किं कारणम् ? स्वार्थिकत्वात् । स्वार्थिकोऽयं त्रः, केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्योऽन्यस्मिन्नयं विधिरिति ।

अनन्तवीर्यादिनिवृत्तिप्रसङ्ग इति चेत्, न अत्रैवान्तर्भावात् ।३। स्यादेतत्–सम्यक्त्वादीनां चतुर्णां क्षायिकाणां संग्रहादितरेषां निवृत्तिरनन्तवीर्यादीनां प्राप्नोतीति, तन्न; किं कारणम् ?
२५ अत्रैवान्तर्भावात् । ज्ञानदर्शनाविनाभाविनो ह्यनन्तवीर्यादयः अत्रैवान्तर्भवन्ति । अनन्तसामर्थ्यहीनस्यानन्तावबोधवृत्त्यभावात्, ज्ञानमयत्वाच्च सुखस्येति ।

बन्धस्याव्यवस्था अश्वादिवदिति चेत्; न, मिथ्यादर्शनाद्युच्छेदे कार्यकारणनिवृत्तेः ।४। स्यादेतत्–यथा अश्वादीनामेकस्मिन् बन्ध उच्छिन्नेऽपि पुनर्बन्धान्तरसंभवादव्यवस्था तथा जीवस्यापि कस्मिंश्चिद् बन्धेऽपगतेऽपि बन्धान्तरप्रसङ्ग इति; तन्न; किं कारणम् ? मिथ्यादर्शनाद्युच्छेदे
३० कार्यकारणनिवृत्तेः । पुनर्बन्धहेत्वभावाद्बन्धाभावः ।

---

१ द्रव्यकर्मभावकर्म–आ० टि० । २ द्रव्य–आ० टि० । ३ भाव । चक्रभ्रमणनिमित्तदण्डापाये न चक्रभ्रमणाभाव, कुलालचक्रचीवराद्यभावे वा न घटाभावः । अपि तर्हि भाव एव–आ० टि० । ४ पञ्चमी विभक्तिरित्यर्थः ।

**पुनर्बन्धप्रसङ्गो जानतः पश्यतश्च कारुण्यादिति चेत्, न, सर्वास्रवपरिक्षयात्** ।५। स्यादेतत्–व्यसनार्णवे निमग्नं जगदशेषं जानतः पश्यतश्च कारुण्यमुत्पद्यते ततश्च बन्ध इति; तन्न; किं कारणम्? सर्वास्रवपरिक्षयात्। भक्तिस्नेहकृपास्पृहादीनां रागविकल्पत्वाद्वीतरागे न ते सन्तीति।

**अकस्मादिति चेत्; अनिर्मोक्षप्रसङ्गः** ।६। यदि कारणमन्तरेणैव मुक्तस्य बन्धः कल्प्यते ननु अनिर्मोक्षः स्यात्। मुक्तिप्राप्त्यनन्तरमेव बन्धोपपत्तेः[1]। ५

**स्थानवत्त्वात्पात इति चेत्, न, अनास्रवत्वात्** ।७। स्यादेतत्–स्थानव[2]त्त्वात् मुक्तस्य पातः प्राप्नोतीति, तन्न; किं कारणम्? अनास्रवत्वात्। आस्रववतो हि यानपात्रस्याधःपतनं दृश्यते, न चास्रवो मुक्तस्यास्ति।

**गौरवाभावाच्च** ।८। गौरववतो हि तालफलस्य तत्प्रतिबद्धवृन्तसंयोगाभावे पतनं दृष्टं नागौरवस्याकाशप्रदेशस्य, न च गौरवमस्ति मुक्तस्येति पाताभावः। यस्य हि स्थानवत्त्वं पातकारणं तस्य सर्वेषां[3] पदार्थाना पातः स्यात् स्थानवत्त्वाविशेषात्। १०

**परस्परोपरोध इति चेत्; न, अवगाहनशक्तियोगात्** ।९। स्यान्मतम्–अल्पः सिद्धावगाह्य आकाशप्रदेश आधारः, आधेयाः सिद्धा अनन्ताः, ततः परस्परोपरोध[4] इति; तन्न; किं कारणम्? अवगाहनशक्तियोगात्। मूर्तिमत्स्वपि नामानेकमणिप्रदीपप्रकाशेषु अल्पेऽप्यवकाशे न विरोधः किमङ्ग पुनरमूर्तिषु अवगाहनशक्तियुक्तेषु मुक्तेषु? १५

**तत एव जन्ममरणद्वन्द्वोपनिपातव्याबाधाविरहात् परमसुखिनः** ।१०। तत एव अमूर्तत्वादेवेत्यर्थः। यस्य हि मूर्त्तिरस्ति तस्य तत्पूर्वकः प्रीतिपरितापसम्बन्धः स्यात्, न चामूर्तानां मुक्तानां जन्ममरणद्वन्द्वोपनिपातव्याबाधाऽस्ति, अतो निर्व्याबाधत्वात् परमसुखिनस्ते।

**न तस्यास्त्युपमानम्, आकाशपरिमाणवत्** ।११। यथा परमाण्ववगाह्यक्षेत्रमारभ्य एकैकप्रदेशवृद्ध्या कल्प्यमानं सातिशयं क्षेत्रमाकाशपरिमाणं पुनरिदं[5]मिवेत्युपमार्थकल्पनाभावादनुपमानं तथा सुखशब्दार्थोऽपि प्रकर्षाप्रकर्षयोगात् संसारगतः [6]सान्तरः, मुक्तानां पुनः परमानन्तपरिमाणयोगान्निरतिशय इत्यनुपमानः। २०

**अनाकारत्वादभाव इति चेत्, न, अतीतानन्तरशरीराकारानुविधायित्वात्** ।१२। स्यादेतत्–मुक्तानां परित्यक्तमूर्त्तीनामाकाराभावादभावः[7] प्राप्नोतीति, तन्न; किं कारणम्? अतीतानन्तरशरीराकारानुविधायित्वात्। २५

**शरीरानुविधायित्वे तदभावाद्विसर्पणप्रसङ्ग इति चेत्, न, कारणाभावात्** ।१३। स्यान्मतम्–यदि शरीरानुविधायी जीव, तदभावात् स्वाभाविकलोकाकाशप्रदेशपरिमाणत्वात्तावद्विसर्पण प्राप्नोतीति, तन्न, कुतः? कारणाभावात्, पुनर्विसर्पणकारणाभावान्न विसर्पति[8]।

**नामकर्मसंबन्धात् संहरणविसर्पणधर्मत्वं प्रदीपप्रकाशवत्** ।१४। यथा प्रदीपप्रकाशोऽवधृतपरिमाणः शरावमानिकापवरकादिद्रव्योपष्टम्भान्महानल्पश्च भवति तथा नामकर्मसंबन्धात् परिच्छिन्नपरिमाणोऽपि जीवः संहरति विसर्पति च, तदभावान्न संहारो विसर्पणं वा मुक्तजीवस्य। ३०

---

१–त्तेः कस्मादिति चेत्? अनिर्मोक्षप्रसङ्गः भा० १। २–नवन्मु–ता०, श्र०, ज०। ३ स्थानवतां धर्मादीनाम्–श्र० टि०। ४ परस्परोपरोधे सति दुःखं जायते ततः क्रोधादिः, ततः पुनरपि बन्धः ततः दुःखसद्भावात् बन्धश्च प्राप्नोति–श्र० टि०। ५–रिदमेवे–मू०, मु०, ता०, ज०, द०, व०। ६ सान्तः–मु०, द०, व०, ज०। ७ अभावत्वे बन्धमोक्षाभावः–श्र० टि०। ८ विसर्पणत्वे सति नामकर्मत्वादिसद्भावात् बन्धप्रसङ्गः–श्र० टि०।

**मूर्तिमद्वैधर्म्यादिति चेत्; न; उभयलक्षणप्राप्तत्वात्**[1] ।१५। स्यान्मतम्–मूर्त्तः प्रदीपप्रकाशः अमूर्त्तस्यात्मनः संहरणविसर्पणधर्मत्वे साध्ये दृष्टान्तो नोपपद्यते इति; तन्न; किं कारणम्? उभयलक्षणप्राप्तत्वात्। उपयोगस्वलक्षणापेक्षया अमूर्त्तः, बन्धपरिणामापेक्षया मूर्त्तः। उक्तं च—

५ "बंध पडि एयत्तं लक्खणदो हवदि तस्स णाणत्तं
तम्हा अमुत्तिभावो णेयन्तो होदि जीवस्स ॥" [ ] इति[2] ।

तस्मात्कथञ्चिन्मूर्त्तत्वोपपत्तेः साम्यमेव दृष्टान्तेन।

**अनित्यत्वप्रसङ्ग इति चेत्; न; तावन्मात्रस्य निर्दिदिक्षितत्वाच्चन्द्रमुखीवत्** ।१६। स्यादेतत्–संहरणविसर्पणधर्मत्वादेव प्रदीपप्रकाशवदनित्यत्वं प्राप्नोत्यात्मन इति; तन्न; किं कारणम्? १० तावन्मात्रस्य निर्दिदिक्षितत्वात्। यथा चन्द्रमुखी कन्येति बहवश्चन्द्रे गुणाः, या चासौ प्रियदर्शनता सा गम्यते तथा प्रदीपप्रकाशेऽनित्यत्वादिषु बहुषु धर्मेषु सत्स्वपि सङ्कोचविकाससाधर्म्यमात्रं विवक्षितम्। सर्वसाधर्म्याच्च दृष्टान्ताभावप्रसङ्गः।

**सर्वथाऽभावो मोक्षः प्रदीपवदिति चेत्; न, साध्यत्वात्** ।१७। स्यादेतत्[3]–यथा वर्तिस्नेहानलसन्निपाते प्रदीपोऽनुपरतवृत्त्या प्रवर्त्तमानस्तत्क्षये न काञ्चिद्दिशं विदिशं वा गच्छति तत्रैवा- १५ त्यन्तविनाशमुपयाति तथा कारणवशात् स्कन्धप्रतिसन्तानरूपेण प्रवर्तमानः स्कन्धसमूहो[4] जीवव्यपदेशभाक् क्लेशक्षयान्न काञ्चिद्दिशं विदिशं वा गच्छति तत्रैवात्यन्तं प्रलयमेतीति; तन्न; किं कारणम्? साध्यत्वात्। साध्यमेतत्–प्रदीपो निरन्वयनाशमुपयातीति। प्रदीपा एव हि पुद्गलाः, पुद्गलजातिमजहतः परिणामवशान्मषीभावमापन्ना इति नात्यन्तविनाशः।

[5]**दृष्टत्वाच्च निगलादिवियोगे देवदत्ताद्यवस्थानवत्** ।१८। यथा निगलादिद्रव्यवियोगे २० देवदत्तादीनामवस्थानं दृष्टं तथा बन्धविप्रमोक्षे आत्मना च स्थेयमिति दृष्टमिदमपह्नोतुमशक्यमिति नाभावः।

**यत्रैव कर्मविप्रमोक्षस्तत्रैवावस्थानमिति चेत्; न, साध्यत्वात्** ।१९। स्यादेतत्–यस्मिन्नेव देशे कर्मविप्रमोक्षस्तस्मिन्नेवावस्थानं प्राप्नोति पुनर्गतिकारणाभावादिति; तन्न; किं कारणम्? साध्यत्वात्। साध्यमेतत्तत्रैवावस्थातव्यमिति, बन्धनाभावादनाश्रितत्वाच्च स्याद्गमनमिति।

२५ आह–न तावदस्य बन्धाभावेऽधोगतिर्गौरवाभावात्, नापि तिर्यग्गतिर्योगाभावात्, तस्मात्प्राप्तमेतत्तत्रैवावस्थानम्, ततो लोकस्योपरि तदवस्थानकल्पनाव्यावृत्तिरिति, उच्यते–भवेदेतदेवं यद्यनभिमतदेशगतिनिमित्ताभाववत्तस्योर्ध्वगतिनिमित्तं न स्यात्। अस्ति च तत्। तस्मादेकसमयेन हि निरस्तकर्मभारः पुरुषः—

## तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥ ५ ॥

३० **तद्वचनं प्रकृतनिर्देशार्थम्** ।१। तदित्यनेन प्रकृतोऽर्थो निर्दिश्यते। कश्च प्रकृतः? कृत्स्नकर्मविप्रमोक्षः। तस्यानन्तरमूर्ध्वं गच्छति।

---

१–यलक्षणत्वात् भा० १। २ उद्धृतेयं गाथा–स० सि० २१७। ३ "दिशं न काञ्चिद्विदिशं न काञ्चित् नैवावनिं गच्छति नान्तरिक्षम्। दीपो यथा निर्वृतिमभ्युपेतो स्नेहक्षयात् केवलमेति शान्तिम् ॥ दिशं न काञ्चिद्विदिशं न काञ्चिद् नैवावनिं गच्छति नान्तरिक्षम्। एवं कृती निर्वृतिमभ्युपेतः स्नेहक्षयात् केवलमेति शान्तिम् ॥"–सौन्दर० १६।२८–२९। ४ पञ्चेन्द्रियजनितपञ्चज्ञानरूपः–श्र० टि०। ५ दीपस्तमःपुद्गलभवतोऽस्ति इत्यभिधानम्। तर्हि अस्माकं विनाशे दृष्टान्ते नास्ति भवतामपि सद्भावे दृष्टान्तो नास्तीत्याशङ्कायाम् अनन्तरमाह–श्र० टि०।

आङभिविध्यर्थः ।२। ईषदर्थादिषु दृष्टप्रयोगः आङिह विवक्षावशादभिविधौ वेदितव्यः। लोकस्यान्तो लोकान्त आलोकान्तादिति ।

आह-अनुपदिष्टहेतुकमिदमूर्ध्वगमनं कथमध्यवसातुं शक्यमिति ? अत्रोच्यते—

## पूर्वप्रयोगादसङ्गत्वाद् बन्धच्छेदात्तथागतिपरिणामाच्च ॥ ६ ॥

आह-हेत्वर्थः पुष्कलोऽपि दृष्टान्तसमर्थनमन्तरेणाभिप्रेतार्थसाधनाय नालमिति; उच्यते— ५

## आविद्धकुलालचक्रवद् व्यपगतलेपालाबूवदेरण्डबीजवद-ग्निशिखावच्च ॥ ७ ॥

हेतुदृष्टान्तानां यथासंख्यमभिसंबन्धः ।१। पूर्वसूत्रे विहितानां हेतूनामत्रोक्तानां दृष्टान्तानां च यथासंख्यमभिसंबन्धो भवति । तद्यथा—

अपवर्गप्राप्तये बहुशः प्रणिधानादाविद्धकुलालचक्रवत् ।२। यथा कुलालप्रयोगापादितहस्त-दण्डचक्रसंयोगपूर्वकं भ्रमणमुपरतेऽपि तस्मिन् पूर्वप्रयोगादासंस्कारक्षयाद्भवति एवं भवस्थेनात्मना अपवर्गप्राप्तये बहुशो यत् प्रणिधानं तदभावेऽपि तदावेशपूर्वकं मुक्तस्य गमनमवसीयते । किञ्च, १०

असङ्गत्वान्मुक्तलेपालाबूद्रव्यवत् ।३। यथा मृत्तिकालेपजनितगौरवमलाबूद्रव्यं जलेऽधः पतति तदेव क्लेदविश्लिष्टमृत्तिकाबन्धनं लघु सदूर्ध्वमेव गच्छति तथा कर्मभाराक्रान्तवशीकृत आत्मा तदावेशवशात् संसारे नियमेन गच्छति, तत्सङ्गविप्रमुक्तौ तूपर्येव[1] याति । १५

अनियमप्रसङ्गो दण्डवदिति चेत्, न, ऊर्ध्वगौरवात् ।४। स्यादेतत्-यथा द्रव्यान्तरसंसक्तो दण्डोऽवस्थितस्तदभावेऽनियमेन पतति तथा कर्मसङ्गाभावेऽनियमेनात्मनोऽपि गमनं प्राप्नोतीति, तन्न; किं कारणम् ? ऊर्ध्वगौरवात् । ऊर्ध्वगौरवपरिणामो हि जीव उत्पतत्येव । किञ्च,

बन्धच्छेदादेरण्डबीजवत् ।५। यथा बीजबन्धकोशादिच्छेदादेरण्डबीजस्य गतिर्दृष्टा तथा मनुष्यादिभवप्रापकगतिजातिनामादिसकलकर्मबन्धच्छेदात् मुक्तस्य गतिरवसीयते । किञ्च, २०

तथागतिपरिणामाच्च अग्निशिखावत् ।६। यथा तिर्यक्पवनस्वभावसमीरणसंबन्धनिरुत्सुका प्रदीपशिखा स्वभावादुत्पतति तथा मुक्तात्माऽपि नानागतिविकारकारणकर्मनिवारणे सति ऊर्ध्वगतिस्वभावत्वादूर्ध्वमेवारोहति ।

असङ्गत्वबन्धच्छेदयोरर्थाविशेषादनुवादप्रसङ्ग इति चेत्, न, अर्थान्यत्वात् ।७। स्यादेतत्-असङ्गत्वबन्धच्छेदयोर्नास्त्यर्थविशेष इति पौनरुक्त्यं[2] प्राप्नोति, [3]बध्नातिरपि व्यतिषङ्गे वर्तत इति, तन्न किं कारणम् ? अर्थान्यत्वात् । अन्योन्यानुप्रवेशे सत्यविभागेनावस्थानं बन्धः, परस्परप्राप्तिमात्रं सङ्ग इत्यस्त्यर्थविशेषः । तस्मात्क्रियाकारणधर्माधर्माभावेऽपि हेत्वन्तरान्मुक्तस्य गतिरभ्यनुज्ञायते । २५

नोदाहरणमलाबूर्मारुतावेशादिति चेत्, न, तिर्यग्गमनप्रसङ्गात् ।८। स्यादेतत्-अलाबूद्रव्यं मुक्तगमनसिद्धावुदाहरणं न भवति; कुतः ? मारुतावेशादिति, तन्न, किं कारणम् ? तिर्यग्गमन-प्रसङ्गात् । यदि मारुतावेशात्तस्य गमनं स्यात्तिर्यक्पवनधर्मत्वान्मरुतस्तिर्यग्गमनमेव स्यान्नोर्ध्वम् । ३०

ऊर्ध्वगत्यभावे तदभावप्रसङ्गोऽग्नेरौष्ण्याभावेऽभाववदिति चेत्, न, गत्यन्तरनिवृत्त्यर्थत्वात् ।९। स्यान्मतम्-यथोष्णस्वभावस्याग्नेरौष्ण्याभावेऽभावस्तथा मुक्तस्योर्ध्वगतिस्वभावत्वे

[1] ऊर्ध्वं गच्छत्येव-ता० टि० । [2] द्वयोरन्यतमेन पर्याप्तत्वात्-श्र० टि० । [3] यस्मात्-श्र० टि० । [4] पुण्य-पाप-श्र० टि० । [5] जीवस्य-श्र० टि० ।

तदभावे तस्याप्यभाव. प्राप्नोतीति; तन्न; किं कारणम् ? गत्यन्तरनिवृत्त्यर्थत्वात्। मुक्तस्योर्ध्वमेव गमनं न दिगन्तरगमनमित्ययं स्वभावो नोर्ध्वगमनमेवेति।

ऊर्ध्वज्वलनवद्वा ।१०। यथा ऊर्ध्वज्वलनस्वभावत्वेऽप्यग्नेर्वेगवद्द्रव्याभिघातात्तिर्यग्ज्वलनेऽपि नाऽग्नेर्विनाशो दृष्टस्तथा मुक्तस्योर्ध्वगतिस्वभावत्वेऽपि तदभावे नाऽभाव इति।

५ अत्राह–ऊर्ध्वज्वलनस्वभावस्याग्नेर्वेगवदभिघातात्तिर्यग्ज्वलने सति विरोधादूर्ध्वज्वलनाभावो युक्तः, मुक्तस्य तु पुनः स्वभावगतिलोपहेत्वभावादूर्ध्वगत्युपरमोऽनुपपन्न इति; उच्यते लोकान्तान्नोर्ध्वगतिर्मुक्तस्य। कुतः ?

## धर्मास्तिकायाभावात् ॥ ८ ॥

गत्युपग्रहकारणभूतो धर्मास्तिकायो नोपर्यस्तीत्यलोके गमनाभावः। तदभावे च लोका-
१० लोकविभागाभावः प्रसज्यते।

किं पुनरमी परिनिर्वृत्ताः कार्मणशरीरोपशमकादिभावनिरुपाख्याः पर्यायान्तरेण शक्या व्यपदेष्टुम् उतातीतव्यवहारा एव निर्धारयितव्या इति ? उच्यते–शक्याः। कथम् ? यस्मात्ते खलु–

## क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञाना-वगाहनान्तरसंख्याल्पबहुत्वतः साध्याः ॥ ९ ॥

१५ प्रत्युत्पन्नभूतानुग्रहतन्त्रनयद्वयापेक्षया क्षेत्रादिभिः साध्याः सिद्धाः ।१। एतैः क्षेत्रादिभिरल्पबहुत्वान्तैर्द्वादशभिरनुयोगद्वारैः प्रत्युत्पन्नभूतानुग्रहतन्त्रनयद्वयापेक्षया साध्याः चिन्त्या विकल्प्याः। के पुनस्ते ? सिद्धा.। तद्यथा क्षेत्रेण तावत् कस्मिन् क्षेत्रे सिद्ध्यन्ति ?

सिद्धिक्षेत्रे कर्मभूमिषु वा ।२। प्रत्युत्पन्नविषयग्राहिनयार्पणेन सिद्धिक्षेत्रे स्वप्रदेशे, आकाशप्रदेशे वा सिद्धिर्भवति। भूतानुग्रहतन्त्रनयविवक्षायां जन्म प्रति पञ्चदशसु कर्मभूमिषु, संहरणं
२० प्रति मानुषक्षेत्रे सिद्धिः। ऋजुसूत्रनयः शब्दभेदाश्च त्रयः प्रत्युत्पन्नविषयग्राहिणः, शेषा नया उभयभावविषयाः। कालेन कस्मिन्काले सिद्धिः ?

एकसमये उत्सर्पिण्यवसर्पिण्योर्वाऽविशेषे ।३। प्रत्युत्पन्ननयापेक्षया एकसमये सिद्ध्यन् सिद्धो भवति। भूतभावप्रज्ञापननयार्पणया द्वेधा–जन्मनः(त )संहरणतश्च। तत्र जन्मतः अविशेषेण उत्सर्पिण्यवसर्पिण्योर्जातः सिद्ध्यति। विशेषेणा अवसर्पिण्यां सुषमदुःषमाया अन्ते भागे दुःषमसुष-
२५ मायां च जात सिद्ध्यति। दुःषमसुषमायां जात. दुःषमायां सिद्ध्यति न तु दुःषमायां जातः, [स] अन्यदा नैव सिद्ध्यति। संहरणतः सर्वस्मिन् काले अवसर्पिण्यामुत्सर्पिण्यां च सिद्ध्यति। गत्या कस्यां गतौ सिद्धिः ?

सिद्धिगतौ मनुष्यगतौ वाऽविशेषः ।४। प्रत्युत्पन्ननयाश्रयणेन सिद्धिगतौ सिद्ध्यति। भूतविषयनयापेक्षया द्विधा कल्पना–अनन्तरगतौ एकान्तरगतौ चेति। तत्रानन्तरगतौ मनुष्य-
३० गतौ सिद्ध्यति। एकान्तरगतौ चतसृषु गतिषु जातः सिद्ध्यति। लिङ्गेन–केन सिद्धिः ? लिङ्गं त्रिविधो वेदः।

अवेदत्वेन त्रिभ्यो वा वेदेभ्यः सिद्धिः ।५। वर्तमानविषयनयविवक्षायामवेदत्वेन सिद्धिर्भवति। अतीतगोचरनयापेक्षया अविशेषेण त्रिभ्यो वेदेभ्यः सिद्धिर्भवति भावं प्रति, न तु द्रव्यं प्रति, द्रव्यापेक्षया तु पुल्लिङ्गेनैव सिद्धिः। अपरः प्रकारः–लिङ्गं द्विविधम्–निर्ग्रन्थलिङ्गं

---

१ लोकाद्बहिर्गमनाभावे–श्र० टि०। २ लक्षणविरहात्–श्र० टि०। ३ ऊर्ध्वगमन–ता०, मू०, श्र०, आ०। ४ वायु–श्र० टि०। ५ धर्मास्तिकायस्याभावे–श्र० टि०।

सग्रन्थलिङ्गं चेति। तत्र प्रत्युत्पन्नविषयनयादेशेन निर्ग्रन्थलिङ्गेन सिद्ध्यति। भूतविषयनयादेशेन तु भजनीयम्। तीर्थेन?

तीर्थसिद्धिर्द्वेधा–तीर्थकरेतरविकल्पात् ।६। तीर्थसिद्धिर्द्वेधा भवति–तीर्थकरत्वेनेतरत्वेन च। सन्ति केचित्तीर्थकरसिद्धाः अपरेऽन्यथा सिद्धाः। ते द्वेधा सत्येव तीर्थकरे सिद्धा, असति चेति। चारित्रेण केन सिद्ध्यति? ५

अव्यपदेशेनैकचतुःपञ्चविकल्पचारित्रेण वा सिद्धिः ।७। प्रत्युत्पन्नावलेहिनयवशान्न चारित्रेण नाप्यचारित्रेण व्यपदेशविरहितेन भावेन सिद्धिः। भूतपूर्वगतिर्द्विधा–अनन्तर-व्यवहित-भेदात्। आनन्तर्येण यथाख्यातचारित्रेण सिद्ध्यति, व्यवधानेन चतुर्भिः पञ्चभिर्वा। चतुर्भिस्तावत् सामायिकच्छेदोपस्थापनासूक्ष्मसाम्पराययथाख्यातचारित्रैः। पञ्चभिस्तैरेव परिहारविशुद्धिचारित्राधिकैः। १०

स्वशक्तिपरोपदेशनिमित्तज्ञानभेदात् प्रत्येकबुद्धबोधितविकल्पः ।८। केचित्प्रत्येकबुद्धसिद्धाः[1], परोपदेशमनपेक्ष्य स्वशक्त्यैवाविर्भूतज्ञानातिशयाः। अपरे बोधितबुद्धसिद्धाः[2], परोपदेशपूर्वकज्ञान-प्रकर्षास्कन्दिनः। ज्ञानेन?

एकेन द्वित्रिचतुर्भिश्च ज्ञानविशेषैः सिद्धिः ।९। प्रत्युत्पन्नग्राहिनयनिरूपणया केवलज्ञानेनैकेन सिद्धिर्भवति। भूतपूर्वगत्या तु द्वाभ्यां त्रिभिश्चतुर्भिश्च ज्ञानविशेषैर्भवति। द्वाभ्याम्–मतिश्रुत-ज्ञानाभ्याम्, त्रिभिर्मतिश्रुतावधिभिः मतिश्रुतमनःपर्ययैर्वा, चतुर्भिर्मतिश्रुतावधिमनःपर्ययैः। १५

अवगाहनं द्विविधम्–उत्कृष्टजघन्यभेदात् ।१०। आत्मप्रदेशव्यापित्वमवगाहनं द्विविधम्–उत्कृष्टं जघन्यं चेति। तत्रोत्कृष्टं पञ्चधनुःशतानि पञ्चविंशत्युत्तराणि। जघन्यम् अर्द्धचतुर्थारत्नयः देशोनाः। मध्ये विकल्पाः। एतस्मिन्नवगाहे सिद्ध्यन्ति पूर्वभावप्रज्ञाननयापेक्षया। प्रत्युत्पन्नभाव-प्रज्ञापने तु एतस्मिन्नेव देशोने। किमन्तरं सिद्ध्यताम्? अनन्तरं च सिद्ध्यन्ति सान्तरञ्च। २०

अनन्तरं जघन्येन द्वौ समयौ उत्कर्षेणाष्टौ ।११। आनन्तर्येण जघन्येन द्वौ समयौ सिद्ध्यन्ति उत्कर्षेणाष्टौ।

अन्तरं जघन्येनैकः समयः उत्कर्षेण षण्मासाः ।१२। सिद्ध्यतां सिद्धिविरहकालोऽन्तरम्। तत् जघन्येनैकसमयः, उत्कर्षेण षण्मासाः प्रत्येतव्याः।

जघन्येन एक उत्कर्षेण अष्टशतमिति संख्या ।१३। एकसमये कति सिद्ध्यन्ति? जघन्येनैकः उत्कर्षेणाष्टशतमिति संख्या अवगन्तव्या। २५

क्षेत्रादिभेदभिन्नानां परस्परतः संख्याविशेषः अल्पबहुत्वम् ।१४। क्षेत्रादिभिरेकादशभिरनुयोगद्वारैः भिन्नानां परस्परतः संख्याविशेषोऽल्पबहुत्वमित्युच्यते। तद्यथा–प्रत्युत्पन्ननयापेक्षया सिद्धिक्षेत्रे सिद्ध्यन्तीति नास्त्यल्पबहुत्वम्। भूतपूर्वनयापेक्षया तु चिन्त्यते–क्षेत्रसिद्धा द्विधा–जन्मतः संहरणतश्च। तत्राल्पे संहरणसिद्धाः[3]। जन्मसिद्धा संख्येयगुणाः[4]। संहरणं द्विविधम्–स्वकृतं परकृतं च। देवकर्मणा चारणविद्याधरैश्च कृतं परकृतम्। स्वकृतं चारणविद्याधराणामेव। तेषां च क्षेत्राणां विभागः–कर्मभूमिः अकर्मभूमिः समुद्रो द्वीप ऊर्ध्वमधस्तिर्यगिति। ३०

---

१ मेघपटलादिकं माटकूटाद्याकारं क्षणदृष्टप्रणष्टमेकं प्रत्यपरोपदेशमन्तरेण स्वशक्त्यैव कामभोगादिभ्यो यो विरक्तबुद्धिर्जायते स प्रत्येकबुद्ध इत्याख्यायते–श्र० टि०। २ यः पुनः कामभोगाद्यासक्तचित्तः परेण बोधितः सन् कामभोगादिभ्यो विरक्तबुद्धिर्जायते स बोधितबुद्धः–श्र० टि०। ३ तेऽप्यनन्ताः–श्र० टि०। ४ संख्येयगुणा अनन्ता इत्यर्थः, एवमुत्तरत्रापि योज्यम्–श्र० टि०।

सर्वस्तोका ऊर्ध्वलोकसिद्धाः। अधोलोकसिद्धाः संख्येयगुणाः। तिर्यग्लोकसिद्धाः संख्येयगुणाः। सर्वस्तोकाः समुद्रसिद्धाः। द्वीपसिद्धाः संख्येयगुणाः। एवं तावदविशेषेण। विशेषेण च सर्वस्तोकाः लवणोदसिद्धाः। कालोदसिद्धाः संख्येयगुणाः। जम्बूद्वीपसिद्धाः संख्येयगुणाः। धातकीकण्डसिद्धाः संख्येयगुणाः। पुष्करद्वीपार्द्धसिद्धाः संख्येयगुणा इति।

५ कालविभागस्त्रिविधः–उत्सर्पिणी अवसर्पिणी अनुत्सर्पिण्यनवसर्पिणी चेति। सर्वस्तोका उत्सर्पिणीसिद्धाः। अवसर्पिणीसिद्धा. विशेषाधिकाः। अनुत्सर्पिण्यवसर्पिणीसिद्धाः संख्येयगुणाः। प्रत्युत्पन्ननयापेक्षया एकसमये सिद्ध्यन्तीति नास्त्यल्पबहुत्वम्।

[[1]अन्तरम्–सर्वस्तो] काः अष्टसमयानन्तरसिद्धाः। सप्तसमयानन्तरसिद्धाः संख्येयगुणाः। [एवमा द्विस] मयानन्तरसिद्धेभ्यः। एवं तावदनन्तरेषु। सान्तरेष्वपि सर्वस्तोकाः षण्मासान्तर-
१० सिद्धाः। [एकसमया]न्तरसिद्धाः संख्येयगुणाः। यवमध्यान्तरसिद्धाः संख्येयगुणाः। अधस्ताद् यवमध्यान्तरसिद्धाः संख्येयगुणा.। उपरियवमध्यान्तरसिद्धा विशेषाधिकाः।

गतिं प्रति–प्रत्युत्पन्नभावप्रज्ञापननयस्य सिद्धिगतौ सिद्ध्यन्तीति नास्त्यल्पबहुत्वम्। भूतविषयनयापेक्षया वानन्तरगतौ मनुष्यगतौ सिद्ध्यन्तीति नास्त्यल्पबहुत्वम्। एकान्तरगतौ तु अल्पबहुत्वमस्ति। सर्वत. स्तोकास्तिर्यग्योन्यनन्तरगतिसिद्धाः, मनुष्ययोन्यनन्तरगतिसिद्धाः संख्येय-
१५ गुणाः, नरकयोन्यनन्तरगतिसिद्धाः संख्येयगुणा', देवयोन्यनन्तरगतिसिद्धाः संख्येयगुणा इति।

वेदानुयोगे–प्रत्युत्पन्ननयाश्रयणे अवेदाः सिद्ध्यन्तीति नास्त्यल्पबहुत्वम्। भूतविषयनयाश्रयणे तु सर्वत. स्तोकाः नपुंसकवेदसिद्धाः। स्त्रीवेदसिद्धाः संख्येयगुणाः। पुंवेदसिद्धाः संख्येयगुणाः।

तीर्थानुयोगे[2]–तीर्थकरसिद्धाः अल्पे। इतरे सिद्धाः संख्येयगुणाः।

चारित्रानुयोगे–प्रत्युत्पन्ननयापेक्षया अव्यपदेशेन सिद्ध्यन्तीति नास्त्यल्पबहुत्वम्। भूत-
२० विषयनयाश्रयणे च अनन्तरचारित्रपरिग्रहे यथाख्यातचारित्राः सर्वे सिद्ध्यन्तीति नास्त्यल्पबहुत्वम्। व्यवधाने च पञ्चचारित्रसिद्धाः अल्पे। चतुश्चारित्रसिद्धाः संख्येयगुणाः।

प्रत्येकबुद्ध-बोधितबुद्धानुयोगे–अल्पे प्रत्येकबुद्धाः। बोधितबुद्धाः संख्येयगुणाः।

ज्ञानानुयोगे–प्रत्युत्पन्नभावप्रज्ञापनस्य केवली सिद्ध्यतीति नास्त्यल्पबहुत्वम्। पूर्वभावप्रज्ञापनस्य सर्वस्तोका द्विज्ञानसिद्धाः। चतुर्ज्ञानसिद्धाः संख्येयगुणाः। त्रिज्ञानसिद्धाः संख्येयगुणाः।
२५ एवं तावदविशेषेण। विशेषेण च सर्वस्तोकाः मतिश्रुतमनःपर्ययज्ञानसिद्धाः। मतिश्रुतज्ञानसिद्धाः संख्येयगुणाः। मतिश्रुतावधिमनःपर्ययज्ञानसिद्धाः संख्येयगुणाः। मतिश्रुतावधिज्ञानसिद्धाः संख्येयगुणा इति।

अवगाहनानुयोगे–सर्वस्तोका' जघन्यावगाहनसिद्धाः। उत्कृष्टावगाहनसिद्धाः संख्येयगुणाः। यवमध्यसिद्धाः संख्येयगुणाः। अधस्ताद्यवमध्यसिद्धाः संख्येयगुणाः। उपरि यवमध्यसिद्धा
३० विशेषाधिका'।

संख्यानुयोगे–सर्वस्तोकाः अष्टशतसिद्धाः। अष्टोत्तरशतसिद्धादयः आपञ्चाशत्सिद्धेभ्यः अनन्तगुणाः। एकान्नपञ्चाशत्सिद्धादयः आपञ्चविंशतिसिद्धेभ्यः असंख्येयगुणाः। चतुर्विंशतिसिद्धादय आ एकसिद्धेभ्य' संख्येयगुणाः।

---

१ तुलना–"अन्तरम्। सर्वस्तोका अष्टसमयानन्तरसिद्धा.। सप्तसमयानन्तरसिद्धा. षट्समयानन्तरसिद्धाः इत्येवं यावद् द्विसमयानन्तरसिद्धाः इति संख्येयगुणाः। एवं तावदनन्तरेषु। सान्तरेष्वपि सर्वस्तोकाः षण्मासान्तरसिद्धा, एकसमयान्तरसिद्धाः संख्येयगुणा., यवमध्यान्तरसिद्धाः संख्येयगुणाः, अधस्ताद् यवमध्यान्तरसिद्धाः संख्येयगुणाः, उपरियवमध्यान्तरसिद्धा' विशेषाधिकाः, सर्वे विशेषाधिकाः"–त० भा० १०।७।
२ प्रत्य–अ० टि०। ३ मतोन्तरगतसि– मू०।

एवं निसर्गाधिगमयोरन्यतरजं तत्त्वार्थश्रद्धानात्मकं शङ्काद्यतीचारविमुक्तं प्रशमसंवेगानुकम्पास्तिक्याभिव्यक्तिलक्षणं विशुद्धं सम्यग्दर्शनं सम्यग्दर्शनोपलब्धिविशुद्धं च ज्ञानमधिगम्य, निक्षेपप्रमाणनिर्देशसत्संख्यादिभिरप्युपायैर्जीवानां पारिणामिकौदयिकौपशमिकक्षायोपशमिकक्षायिकाणां भावानां स्वतत्त्वं विदित्वा चेतनाचेतनानां भोगसाधनानामुत्पत्तिप्रलयस्वभावावगमात् विरक्तो वितृष्णस्त्रिगुप्तः पञ्चसमितो दशलक्षणधर्मानुष्ठानात्तत्फलदर्शनाच्च निर्वाणप्राप्तियतनायाभिवर्द्धितश्रद्धासंवेगभावनाविर्भावितात्मा अनुप्रेक्षाभिः स्थिरीकृतानभिष्वङ्गः[1] संवृतात्मा निरास्रवत्वाद् व्यपगताभिनवकर्मोपचयः परिषहजयाद्बाह्याभ्यन्तरतपोऽनुष्ठानादनुभवनाच्च सम्यग्दृष्टिविरताविरतादीनां च जिनपर्यन्तानां परिणामाध्यवसानविशुद्धिस्थानान्तराणामसंख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितं कर्म निर्जरयन् सामायिकादीनां च सूक्ष्मसाम्परायान्तानां संयमविशुद्धिस्थानानामुत्तरोत्तरोपलम्भात् पुलाकादीनां च निर्ग्रन्थानां संयमानुपालनविशुद्धिस्थानविशेषाणामुत्तरोत्तरप्रतिपत्त्या घटमानोऽत्यन्तप्रहीणार्त्तरौद्रध्यानो धर्म्यध्यानविजयादवाप्तसमाधिबलः, शुक्लध्यानविकल्पयोश्च पृथक्त्वैकत्ववितर्कयोश्चान्यतरस्मिन् वर्तमानो नानाविधपूर्वोदितर्द्धिविशेषयुक्तः, तत्रानभिष्वक्तचित्तः, पूर्वोदितेन क्रमेण मोहादीन् क्षयं नीत्वा सर्वज्ञज्ञानलक्ष्मीमनुभूय, ततः शेषकर्मक्षयाद्भवबन्धनिर्मुक्तः निर्दग्धपूर्वोपादानेन्धनो निरुपादान इवाग्निः पूर्वोपात्तभववियोगात् हेत्वभावाच्चोत्तरस्याप्रादुर्भावात् शान्तः संसारदुःखमतीत्य आत्यन्तिकमैकान्तिकं निरुपमं निरतिशयं निर्वाणसुखमवाप्नोतीति तत्त्वार्थभावनाफलमेतत्। उक्तञ्च—

"एवं [2]तत्त्वपरिज्ञानाद्विरक्तस्यात्मनो भृशम्। निरास्रवत्वाच्छिन्नायां नवायां कर्मसन्ततौ ॥ १ ॥
पूर्वार्जितं क्षपयतो यथोक्तैः क्षयहेतुभिः। संसारबीजं कार्त्स्न्येन मोहनीयं प्रहीयते ॥ २ ॥
ततोऽन्तरायज्ञानघ्नदर्शनघ्नान्यनन्तरम्। प्रहीयन्तेऽस्य युगपत्त्रीणि कर्माण्यशेषतः ॥ ३ ॥
गर्भसूच्यां विनष्टायां यथा तालो विनश्यति। तथा कर्म क्षयं याति मोहनीये क्षयं गते ॥ ४ ॥
ततः क्षीणचतुःकर्मा प्राप्तोऽथाख्यातसंयमम्। [3]बीजबन्धननिर्मुक्तः स्नातकः परमेश्वरः ॥ ५ ॥
शेषकर्मफलापेक्षः शुद्धो बुद्धो निरामयः। सर्वज्ञः सर्वदर्शी च जिनो भवति केवली ॥ ६ ॥
कृत्स्नकर्मक्षयादूर्ध्वं निर्वाणमधिगच्छति। यथा दग्धेन्धनो वह्निर्निरुपादानसन्ततिः ॥ ७ ॥
दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः। कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥ ८ ॥
तदनन्तरमेवोर्ध्वमालोकान्तात् स गच्छति। पूर्वप्रयोगासङ्गत्वबन्धच्छेदोर्ध्वगौरवैः ॥ ९ ॥
कुलालचक्रे दोलायामिषौ चापि यथेष्यते। पूर्वप्रयोगात् कर्मेह तथा सिद्धगतिः स्मृता ॥१०॥
मृल्लेपसङ्गनिर्मोक्षाद्यथा दृष्टोऽप्स्वलाबुनः। कर्मसङ्गविनिर्मोक्षात्तथा सिद्धगतिः स्मृता ॥११॥
एरण्डयन्त्रपेलासु बन्धच्छेदाद्यथा गतिः। कर्मबन्धनविच्छेदात्सिद्धस्यापि तथेष्यते ॥१२॥
ऊर्ध्वगौरवधर्माणो जीवा इति जिनोत्तमैः। अधोगौरवधर्माणः पुद्गला इति चोदितम् ॥१३॥
यथाधस्तिर्यगूर्ध्वं च लोष्टवाय्वग्नि[4]वीतयः। स्वभावतः प्रवर्तन्ते तथोर्ध्वगतिरात्मनाम् ॥१४॥
अतस्तु गतिवैकृत्यं तेषां[6] यदुपलभ्यते। कर्मणः प्रतिघाताच्च प्रयोगाच्च तदिष्यते ॥१५॥
[7]स्यादधस्तिर्यगूर्ध्वं च जीवानां कर्मजा गतिः। ऊर्ध्वमेव स्वभावेन भवति क्षीणकर्मणाम् ॥१६॥
द्रव्यस्य[9] कर्मणो यद्वदुत्पत्त्यारम्भवीतयः[10]। समं तथैव सिद्धस्य गतिमोक्षे भवक्षयात् ॥१७॥
उत्पत्तिश्च विनाशश्च प्रकाशतमसोरिह। युगपद्भवतो यद्वत्तथानिर्वाणकर्मणो ॥१८॥

---

१ अपरिभवः—श्र० टि०। २ सम्यक्त्वज्ञानचारित्रसंयुक्तस्या—मु०। ३ घाति—श्र० टि०। ४—ग्निर्वीतयः मु०, द०, ब०, ज०। विरुद्धगमनाः। ५ संसारे तिर्यगादि—श्र० टि०। ६ जीवानाम्—श्र० टि०। ७ अधस्तिर्यगूर्ध्वं च मू०, ज०, द०, ब०। अधस्तिर्यक्तथोर्ध्वं मु०। ८ देवादीनामधोगमनादि—श्र० टि०। ९ द्रव्यकर्मणः—श्र० टि०। १० अकर्मरूपेणोत्पत्तिः जीवप्रदेशान्निर्गमनमारम्भः—श्र० टि०।

तन्वी मनोज्ञा सुरभिः पुण्या परमभासुरा । प्राग्भारा नाम वसुधा लोकमूर्ध्नि व्यवस्थिता ॥१९॥
नृलोकतुल्यविष्कम्भा सितच्छत्रनिभा शुभा । ऊर्ध्वं तस्याः क्षितेः सिद्धा लोकान्ते समवस्थिताः ॥२०॥
तादात्म्यादुपयुक्तास्ते केवलज्ञानदर्शने । सम्यक्त्वसिद्धतावस्थाः हेत्वभावाच्च निष्क्रियाः ॥२१॥
ततोऽप्यूर्ध्वगतिस्तेषां कस्मान्नास्तीति चेन्मतिः । धर्मास्तिकायस्याभावात्स हि हेतुर्गतेः परः ॥२२॥
५ संसारविषयातीतं सिद्धानामव्ययं सुखम् । अव्याबाधमिति प्रोक्तं परमं परमर्षिभिः ॥२३॥
स्यादेतदशरीरस्य जन्तोर्नष्टाष्टकर्मण. । कथं भवति मुक्तस्य [1]सुखमित्यत्र मे शृणु ॥२४॥
लोके चतुर्ष्विहार्थेषु सुखशब्दः प्रयुज्यते । विषये वेदनाभावे विपाके मोक्ष एव च ॥२५॥
सुखो वह्निः सुखो वायुर्विषयेष्विह कथ्यते । दु.खाभावे च पुरुषः सुखितोऽस्मीति भाषते ॥२६॥
पुण्यकर्मविपाकाच्च सुखमिष्टेन्द्रियार्थजम् । कर्मक्लेशविमोक्षाच्च मोक्षे सुखमनुत्तमम् ॥२७॥
१० सुषुप्तावस्थया तुल्यां केचिदिच्छन्ति निर्वृतिम् । तदयुक्तं क्रियावत्त्वात् सुखानु[2]शयतस्तथा ॥२८॥
श्रमक्लमभदव्याधिमदनेभ्यश्च सम्भवात् । मोहोत्पत्तिर्विपाकाच्च दर्शनघ्नस्य कर्मणः ॥२९॥
लोके तत्सदृशो ह्यर्थः कृत्स्नेऽप्यन्यो न विद्यते । उपमीयेत तद्येन तस्मान्निरुपमं स्मृतम् ॥३०॥
लिङ्गप्रसिद्धेः प्रामाण्यमनुमानोपमानयोः । [3]अलिङ्गं चाऽप्रसिद्धं च तत्तेनानुपमं स्मृतम् ॥३१॥
प्रत्यक्षं तद्भगवतामर्हतां तैश्च भाषितम् । गृह्यतेऽस्तीत्यतः प्राज्ञैर्न छद्मस्थपरीक्षया ॥३२॥[4]
१५ इति[5] तत्त्वार्थसूत्राणां भाष्यं भाषितमुत्तमैः । यत्र न् [6]सन्निहितस्तर्कन्यायागमविनिर्णयः ॥३३॥"

[　　　]

इति तत्त्वार्थवार्तिके व्याख्यानालङ्कारे दशमोऽध्यायः समाप्तः ।

[ समाप्तोऽयं ग्रन्थः ]

---

१ सुखमित्युत्तरं श्र–मु० । २ पश्चात्तापत.–श्र० टि० । ३ अव्यक्तत्वा प्र–मु०, द०, ब०, ज० ।
४ इमे द्वात्रिंशत् श्लोकाः त० भाष्ये ( १०।७ ) जयधवलायां तत्त्वार्थसारे च मोक्षतत्त्ववर्णने उपलभ्यन्ते ।
५ श्लोकोऽयं नास्ति मु०, द०, ब०, ज० । ६ मानाङ्कन –श्र० टि० ।

# पाँचवाँ अध्याय

## अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ १ ॥

धर्म अधर्म आकाश और पुद्गल अजीव भी है और काय अर्थात् बहुप्रदेशी भी।

§ १-५. 'अजीव जो काय' इस प्रकार समानाधिकरणा वृत्ति यहाँ समझनी चाहिए। अजीव शब्दकी कालमे तथा काय शब्दकी जीवमे भी वृत्ति होनेसे यहाँ परस्पर व्यभिचार है अत. नीलोत्पलकी तरह समानाधिकरण वृत्ति है। यदि भिन्नअधिकरणरूप वृत्ति मानी जाय तो 'राजाका पुरुष राजपुरुष' इसकी तरह अजीवोका काय इस प्रकारके सर्वथा भेदका प्रसग आयगा। यद्यपि 'सुवर्णकी अंगूठी' यहाँ सुवर्ण और अंगूठीमे अभेद रहने पर भी भेदमूलक षष्ठी समास देखा गया है तो भी जैसे 'सुवर्णकी अंगूठी' इस स्थलपर सुवर्णका प्रयोग चाँदी आदिकी निवृत्तिके लिए है कि-यह अंगूठी सुवर्णकी है, चाँदी आदिकी नही है और न मासा रत्ती आदिकी, उस तरह 'अजीवके काय' यहाँ किसी पदार्थान्तरकी निवृत्ति नही करनी है। अथवा, भिन्नाधिकरण भी वृत्ति माननेमे कोई विरोध नही है। जीव भी काय है क्योकि पाँच अस्तिकायोमे जीवका भी नाम है। इसलिए उसकी निवृत्तिके लिए यहाँ अजीव शब्दका प्रयोग किया गया है कि अजीवके काय, जीवके नहीं। 'सुवर्णकी अंगूठी' यहाँ भी सुवर्ण द्रव्यसे अगूठी पर्यायमे संज्ञा लक्षण प्रयोजन आदिके भेदसे भेद है ही। यदि सुवर्ण और अंगूठीमे सर्वथा अभेद माना जाय तो सुवर्णकी कुंडल आदि पर्यायोमे वृत्ति नहीं होनी चाहिए, या सुवर्णकी तरह अंगुलीयकत्व (अंगूठीपना) कुंडल आदिमे भी पाया जाना चाहिए। इसीलिए अन्य चाँदी आदिकी निवृत्तिके लिए 'सुवर्ण' शब्दका प्रयोग किया गया है। सर्वथा अभेदमे 'सुवर्णकी अंगूठी' यह भेद प्रयोग ही नहीं हो सकता। 'अजीवकायाः' यहाँ काय शब्द प्रदेशवाचक है। धर्मादि द्रव्य अपने प्रदेशोसे संज्ञा लक्षण और प्रयोजन आदिकी दृष्टिसे भिन्न भी हैं। यदि सर्वथा अभेद हो तो जैसे धर्मादि एक है उसी तरह प्रदेशोमे भी एकत्व होना चाहिए, अथवा जैसे प्रदेश बहुत है उसी तरह धर्मादिकमे भी बहुत्व होना चाहिए। इसीलिए अन्यनिवृत्तिके लिए 'अजीव शब्दका प्रयोग किया है कि-अजीवोंके काय, न कि जीवके। यदि सर्वथा एकत्व होता तो 'अजीवके काय' यह भेद-व्यवहार ही नहीं हो सकता था। 'शिलापुत्रकका शरीर या राहुका सिर' इन प्रयोगोमे भी कथञ्चिद् भेद है ही। बुद्धि शब्द और प्रयोजन आदिके भेदसे उनमे भेद है। इसलिए यहाँ भी अन्य निवृत्तिके लिए शिलापुत्रक या राहु शब्द दिया जाता है। अर्थात् शिलापुत्रकका यह शरीर है अन्य मनुष्य आदिका नहीं, राहुका यह शिर है अन्य का नही। सर्वथा अभेदमे अन्यनिवृत्तिकी आवश्यकता ही नही रह जाती जैसे सुवर्णका सुवर्ण या घटका घट।

§ ६. **'न जीवः अजीवः'** कहनेसे अजीवको केवल जीवाभाव रूप ही नहीं समझना चाहिए, किन्तु जैसे 'अनश्व' कहनेसे घोड़ेके निषेधके साथ ही घोड़े सरीखे अन्य प्राणी (गधा आदि) का प्रत्यय होता है उसी तरह अजीवसे भी जीवसे भिन्न अन्य अचेतन पदार्थका संप्रत्यय होता है। जड़ और चेतनमे सत्त्व द्रव्यत्व आदिकी दृष्टिसे सादृश्य है ही। एक 'सत्' पदार्थ ही पररूप आदिकी अपेक्षा अभावप्रत्ययका विषय होता है।

§ ७-८. काय शब्दमे 'कायकी तरह काय' यह सादृश्य अर्थ अन्तर्भूत है। अर्थात् जैसे काय-शरीर औदारिकादि शरीरनामकर्मके उदयसे अनेक पुद्गल-परमाणुओसे संचित

होता है उसी तरह धर्मादि द्रव्य अनादि-पारिणामिक प्रदेशोवाले होनेसे काय है। काय शब्दका ग्रहण ही प्रदेश या अवयवोकी बहुतायत सूचित करनेके लिए है। धर्मादिकमे मुख्य रूपसे प्रदेश न रहनेपर भी एक परमाणुके द्वारा रोके गये आकाश प्रदेशके नापसे बुद्धिके द्वारा उनमे असंख्येय आदि प्रदेश स्वीकार किये जाते है।

§ ६–१४. **प्रश्न**–'असंख्येयाः प्रदेशा धर्माधर्मैकजीवानाम्' इस सूत्रसे ही बहुप्रदेशीपना सिद्ध है फिर काय ग्रहण करना निरर्थक है। प्रदेशोकी संख्याके निश्चयके लिए भी इसकी उपयोगिता नही है क्योकि इससे तो प्रदेशप्रचयमात्रकी ही प्रतीति होती है। 'लोकाकाशेऽवगाहः' के बाद 'धर्माधर्मयोः कृत्स्ने' कहनेसे द्रव्योके प्रदेशोके परिमाणका निश्चय हो जाता है। काय ग्रहणके बिना अप्रदेशी एकद्रव्यपनेका प्रसंग भी नही आ सकता; क्योकि 'असंख्येयाः प्रदेशा धर्माधर्मैकजीवानाम्' सूत्रसे ही बहुप्रदेशित्व सूचित हो जाता है। पंचास्तिकायके आर्ष उपदेशके अनुवादके लिए काय शब्दका ग्रहण निरर्थक है क्योकि 'असंख्येयाः प्रदेशाः' इत्यादि सूत्रसे ही वह कार्य हो जाता है। 'काय-बहुप्रदेशित्वरूप स्वभाव उनका सदा रहता है छूटता नही' इस बातके द्योतनके लिए भी काय शब्दका कोई उपयोग नही है, क्योकि 'नित्य और अवस्थित' कथनसे ही स्वभावका अपरित्याग सिद्ध हो जाता है।

§ १५-१६. **उत्तर**–कायशब्दके ग्रहणसे पाँचो ही अस्तिकायोमे प्रदेशबहुत्वकी सिद्धि होनेपर ही 'असंख्येयाः प्रदेशा धर्माधर्मैकजीवानाम्' यह सूत्र प्रदेशोकी असंख्येयताका अवधारण कर सकता है कि असंख्येय ही प्रदेश है न संख्येय और न अनन्त। अवधारण विधिपूर्वक होता है। फिर कालद्रव्यके बहुप्रदेशित्वके प्रतिषेधके लिए यहाँ 'काय' का ग्रहण करना उपयुक्त है। जिस प्रकार अणुको एकप्रदेशी होनेसे अर्थात् द्वितीय आदि प्रदेश न होनेसे 'अप्रदेश' कहते हैं उसी तरह कालपरमाणु भी एकप्रदेशी होनेसे अप्रदेशी है।

§ १७. सर्वज्ञ प्रतिपादित आर्हत आगममे ये धर्म अधर्म आकाश आदि संज्ञाएँ सांकेतिक है, रूढ़ हैं।

§ १८–२३. अथवा, इन संज्ञाओको क्रियानिमित्तक भी कह सकते है। स्वयं क्रियापरिणत जीव और पुद्गलोको जो सहायक हो ( साचिव्यं दधातीति धर्मः ) वह धर्म है। इससे विपरीत अर्थात् स्थितिमे सहायक अधर्म होता है। जिसमे जीवादि द्रव्य अपनी अपनी पर्यायोके साथ प्रकाशमान हो तथा जो स्वयं अपनेको भी प्रकाशित करे वह आकाश। अथवा, जो अन्य सब द्रव्योको अवकाश दान दे वह आकाश। यद्यपि अलोकाकाशमे द्रव्योका अवगाह न होनेसे यह लक्षण नही घटता तथापि शक्तिकी दृष्टिसे उसमे भी आकाशव्यवहार होता ही है। जैसे अतिदूर भविष्यत् कालमे वर्तमानप्राप्तिकी योग्यताके कारण ही भविष्यत् व्यपदेश होता है उसी तरह अलोकाकाशमे अवगाही द्रव्योके न होनेपर भी अवगाहनशक्तिके कारण अखण्डद्रव्यप्रयुक्त आकाशव्यवहार हो जाता है।

§ २४–२६. जैसे भा को करनेवाला भास्कर कहा जाता है उसी तरह जो भेद संघात और भेदसंघातसे पूरण और गलनको प्राप्त हो वे पुद्गल है। यह शब्द 'शवशयनं श्मसानम्' की तरह पृषोदरादिगणमे निष्पन्न होता है। परमाणुओमे भी शक्तिकी अपेक्षा पूरण और गलन है तथा प्रतिक्षण अगुरुलघुगुणकृत गुणपरिणमन गुणवृद्धि और गुणहानि होती रहती है अतः उनमे भी पूरण और गलन व्यवहार माननेमे कोई बाधा नही है। अथवा, पुरुष यानी जीव जिनको शरीर आहार विषय और इन्द्रिय-उपकरण आदिके रूपमे निगले–ग्रहण करे वे पुद्गल हैं। परमाणु भी स्कन्ध दशामे जीवोके द्वारा निगले ही जाते हैं।

§ २७. 'धर्माधर्माकाशपुद्गलाः' यहाँ वहुवचन स्वातन्त्र्यप्रतिपत्ति के लिए है। इनका यही स्वातन्त्र्य है कि ये स्वयं गति और स्थिति रूपसे परिणत जीव और पुद्गलोकी गति और स्थितिमे स्वयं निमित्त होते है, जीव या पुद्गल इन्हें उकसाते नहीं है। इनकी प्रवृत्ति पराधीन नहीं है। यद्यपि इतरेतरयोग द्वन्द्वमे वहुवचन न्यायप्राप्त था पर समाहारमे समुदायकी प्रधानता होनेसे एकवचनसे ही कार्य चल जाता है, फिर भी जो वहुवचनका निर्देश किया गया है वह स्वातन्त्र्यका ज्ञापक है। जैसे जैनेन्द्र व्याकरणमे 'हृतः'। यहाँ 'हृत्' इस एक वचनसे कार्य चल सकता था फिर भी वहुवचनका निर्देश ज्ञापन करता है कि अनुक्तमे भी तद्धितीय प्रत्यय होता है।

§ २८-३०. धर्म शब्दकी लोकमे प्रतिष्ठा है अतः सूत्रमे धर्मका पहिले ग्रहण किया है। अधर्मद्रव्यसे लोककी पुरुषाकार आकृतिकी व्यवस्था वनती है अत. अधर्मका उसके अनन्तर ग्रहण किया है। यदि अधर्मद्रव्य न माना जाता तो जीव और पुद्गल समस्त आकाश अर्थात् अलोकाकाशमे भी जा पहुँचते, इस तरह लोकका कोई आकार ही नहीं बन पाता। अतः लोक-अलोक विभाग अधर्मद्रव्यके कारण ही वनता है। फिर अधर्म धर्मका प्रतिपक्षी है, अतः उसका धर्मके वाद ग्रहण करना उचित ही है।

§ ३१-३२. धर्म और अधर्मके द्वारा आकाशका परिच्छेद किया जाता है-लोक और अलोकके रूपमे। जहाँ तक धर्म और अधर्म हैं वह लोक, आगेका अलोक। अतः धर्म और अधर्मके वाद आकाशको ग्रहण किया है। फिर अमूर्तरूपसे आकाश धर्म और अधर्ममे सजातीयपना भी है।

§ ३३ आकाशसे पुद्गल अवकाश पाते है, अत' आकाशके पास पुद्गलका ग्रहण किया गया है।

§ ३४-३५. प्रश्न-आकाशका ग्रहण सर्वप्रथम करना चाहिए क्योकि वह धर्म और अधर्म आदिका आधार है? उत्तर-लोककी यह रचना अनादिसे है, इसमे आधाराधेयभाव-मूलक पौर्वापर्य नही है। आदिवाले दही और कुंड आदिमे ही आधाराधेयमूलक पौर्वापर्य होता है। यद्यपि आर्ष ग्रन्थमे यह वताया है कि-"आकाश स्वप्रतिष्ठ है, आकाशमे तनुवातवलय, तनुवातवलयमे घनवातवलय, धनवातवलयमे घनोदधिवातवलय आधेय रूपसे है" इत्यादि, फिर भी कोई विरोध नहीं है, क्योकि यदि आधाराधेयभावका सर्वथा निपेध किया जाता तो विरोध होता। परन्तु द्रव्यार्थिककी प्रधानतासे सभी द्रव्य स्वप्रतिष्ठ है, अतएव आधाराधेय-भाव नहीं रहनेपर भी पर्यायार्थिककी प्रधानतामे आधाराधेयभाव है ही। इसी तरह व्यवहार नयसे आकाशको आधार और अन्य द्रव्योको आधेय कहते ही है। एवंभूतनयसे अनादि पारिणामिक लोकरचनाकी अपेक्षा आधाराधेयभाव नहीं भी है। व्यवहारमे तनुवातवलयका आधार आकाशको माननेपर आकाशके भी अन्य आधारकी कल्पना करके अनवस्था दूषण नही आ सकता, क्योकि आकाश सर्वगत और अनन्त है, अत. उसके अन्य आधारकी कल्पना करना उचित नही है। असर्वगत सान्त मूर्तिमान् और सावयव पदार्थोंमे ही अन्य आधार की कल्पना हो सकती है।

§ ३६ यद्यपि काल भी अजीव है और भाष्यमे अनेक वार छह द्रव्योका कथन भी किया है, पर इसका लक्षण आगे किया है अत. उसे यहाँ नही गिनाया है।

## द्रव्याणि ॥ २ ॥

उपर्युक्त धर्माधर्मादि द्रव्य है।

§ १. स्व और पर कारणोसे होनेवाली उत्पाद और व्यय रूप पर्यायोको जो प्राप्त हो तथा पर्यायोसे जो प्राप्त होता हो वह द्रव्य है। द्रव्य क्षेत्र काल और भाव रूप वाह्य प्रत्यय पर है

तथा अपनी स्वाभाविक शक्ति स्व प्रत्यय है। वाह्य प्रत्ययोंके रहनेपर भी यदि द्रव्यमें स्वयं उस पर्यायकी योग्यता न हो तो पर्यायान्तर उत्पन्न नहीं हो सकती। दोनोंके मिलनेपर ही पर्याय उत्पन्न होती है, जैसे पकने योग्य उड़द यदि वोरेमें पड़ा हुआ है तो पाक नहीं हो सकता और यदि घोटक ( न पकने योग्य ) उड़द वटलोईमें उवलते हुए पानीमें भी डाला जाय तो भी नहीं पक सकता। यद्यपि पर्यायें या उत्पाद-व्यय उस द्रव्यसे अभिन्न होते हैं तथापि कर्तृ और कर्ममें भेद-विवक्षा करके 'द्रवति गच्छति' यह निर्देश वन जाता है। जिस समय द्रव्यको कर्म-पर्यायोंको कर्ता वनाते हैं तव कर्ममें द्रुधातुसे 'य' प्रत्यय हो ही जाता है, और जब द्रव्यको कर्ता मानते तव वहुलापेक्षया कर्तामें 'य' प्रत्यय हो जाता है। तात्पर्य यह कि उत्पाद और विनाश आदि अनेक पर्यायोंके होते रहनेपर भी जो सान्ततिक द्रव्यदृष्टिसे गमन करता जाय वह द्रव्य है।

§ २. अथवा, द्रव्य शब्दको इवार्थक निपात मानना चाहिए। **'द्रव्य भव्ये'** इस जैनेन्द्र व्याकरणके सूत्रानुसार 'द्रु' की तरह जो हो वह 'द्रव्य' यह समझ लेना चाहिए। जिस प्रकार विना गांठकी सीधी द्रु-लकड़ी वढ़ई आदिके निमित्तसे टेविल कुरसी आदि अनेक आकारोंको प्राप्त होती है उसी तरह द्रव्य भी उभयकारणोंसे उन उन पर्यायोंको प्राप्त होता रहता है। जैसे 'पाषाण खोदनेसे पानी निकलता है' यहाँ अविभक्तकर्तृक करण है उसी तरह द्रव्य और पर्यायमें भी समझना चाहिए।

§ ३. प्रश्न-जैसे दण्डके सम्वन्धसे देवदत्तमें दंडी व्यवहार और ज्ञान होता है उसी तरह द्रव्यत्व नामके सामान्य पदार्थके सम्वन्धसे पृथिवी आदिमें 'द्रव्य' यह व्यवहार हो जायगा। इसीसे वह गुण कर्म आदिसे व्यावृत्त भी सिद्ध हो जाती है। अत: द्रव्यत्वके सम्वन्धसे ही द्रव्य मानना चाहिए न कि पर्यायोंको प्राप्त होनेसे। उत्तर—उपर्युक्त शंका ठीक नहीं है; क्योंकि जिस प्रकार दंडके सम्वन्धसे पहिले देवदत्त अपनी जाति आदिसे युक्त होकर प्रसिद्ध है और देवदत्तके सम्वन्धके पहिले दंड अपने लक्षणोंसे प्रसिद्ध है उस तरह द्रव्यत्वके सम्वन्धके पहिले न तो द्रव्य ही प्रसिद्ध है और न द्रव्यत्व ही। यदि द्रव्यत्वके सम्वन्धके पहिले द्रव्य उपलब्ध हो तो द्रव्यत्वके सम्वन्धकी कल्पना ही व्यर्थ है। इस तरह दोनों जब सम्बन्धसे पहिले असत् हैं तव उनके सम्वन्धकी कल्पना ही नहीं हो सकती। अस्तित्व भी मान लिया जाय, पर जब उनमें पृथक्-पृथक् शक्ति नहीं है तव मिलकर भी स्वप्रत्ययोत्पादनकी शक्ति नहीं आ सकती। जैसे कि दो जन्मान्धोंको एक साथ मिला देनेपर भी दर्शन-शक्ति उत्पन्न नहीं होती, उसी तरह द्रव्य और द्रव्यत्वमें जब द्रव्य-प्रत्यय और व्यवहारकी शक्ति नहीं है तव दोनोंके सम्वन्ध होने पर भी वह व्यवहार नहीं हो सकेगा। यदि द्रव्यत्वके सम्वन्धके पहिले भी द्रव्य अपनेमें द्रव्य-व्यवहार करा सकता था तो द्रव्यत्वकी कल्पना ही निरर्थक है। इसी तरह द्रव्यत्व भी द्रव्य-समवायके पहिले द्रव्यव्यवहारका निमित्त नहीं वन सकता। द्रव्यत्वके सम्वन्धके पहिले यदि द्रव्यका 'सत्' स्वरूप भी होता तो द्रव्यत्वका सम्वन्ध मानना उचित होता किन्तु द्रव्य स्वतः सत् भी नहीं है वह तो सत्ताके समवायसे 'सत्' होता है। यदि असत् में भी सत्तासमवाय माना जाता है तो खरविषाणमें भी होना चाहिए। किंच, द्रव्यत्व सामान्य सर्वगत है, अतः यदि अतदात्मक द्रव्यमें वह समवायसम्वन्धसे रहता है तो गुण और कर्म आदिमें भी रहना चाहिए। यदि द्रव्य तदात्मक है अतः उसमें ही द्रव्यत्वका समवाय होता है; तो फिर द्रव्यत्वके समवायकी कल्पना ही निरर्थक है। यह कहना भी ठीक नहीं है कि द्रव्य चूँकि सम-वायिकारण है अतः द्रव्यत्वका समवाय उसीमें होता है गुण कर्म या खरविषाण आदिमें नहीं, क्योंकि द्रव्यत्वसम्वन्धके पहिले जव द्रव्यका कोई स्वरूप ही नहीं है तव किसे समवायिकारण कहा जाय? यदि निःस्वरूप द्रव्य समवायिकारण हो सकता है तो

खरविषाण आदिको भी होना चाहिए। असत् होनेसे खरविपाण यदि समवायिकारण नही हो सकता, तो असत्त्व तो द्रव्यमे भी विद्यमान है। तात्पर्य यह कि जिस कारण द्रव्य ही समवायिकारण होता है गुणकर्म आदि नहीं, उसी कारण यह मानना होगा कि द्रव्यका निजस्वरूप ही द्रव्यका आत्मा है और उसीसे द्रव्यव्यवहार होता है। यह स्वरूप अनादि-पारिणामिक है। द्रव्यसे बाहरका कोई द्रव्यत्व नामका सामान्यविशेष नही। यह समाधान भी उचित नहीं है कि–'द्रव्यमे एक विशेपता है जिसके कारण वही समवायिकारण होता है गुण कर्म आदि नहीं और इसीलिए द्रव्यत्व उसीमे समवायसम्बन्धसे रहता है अन्यमे नहीं। वह विशेषता है 'आधार होना'। द्रव्य ही गुण कर्म आदिका आधार होता है', क्योकि जब द्रव्य स्वतः 'सत्' भी नहीं है तब वह कैसे किसीका आधार हो सकता है? स्वतःसिद्ध घड़ा ही जलादिका आधार होता है।

§ ४. जो वादी द्रव्यत्वके योगसे द्रव्य मानते है उनके यहाँ 'द्रव्य' यह व्यपदेश ही नहीं हो सकता। अभेद रूपसे व्यपदेश माननेपर जैसे यष्टिके साहचर्यसे पुरुषको 'यष्टि' कह देते हैं उस तरह तो 'द्रव्यत्व'के सम्बन्धसे द्रव्यसे 'द्रव्यत्व' व्यपदेश होगा न कि द्रव्य। यह समाधान ठीक नही है कि 'द्रव्यत्वका वाचक द्रव्यत्व शब्दके समान 'द्रव्य' शब्द भी है अतः उसके सम्बन्धसे उसमे द्रव्यव्यवहार हो जायगा', क्योकि यदि द्रव्यत्वकी 'द्रव्य' यह संज्ञा स्वत. ही है तो द्रव्यको स्वत माननेमे क्या असन्तोप है? उसकी भी 'द्रव्य' यह संज्ञा स्वतः मान लेनी चाहिए। यदि यह संज्ञा किसी अन्य पदार्थके सम्बन्धसे है तो वे ही दोप आते है। फिर यदि द्रव्यत्वके वाचक 'द्रव्यत्व और द्रव्य' ये दो शब्द है तो 'द्रव्य' व्यपदेशकी तरह 'द्रव्यत्व' व्यपदेश भी होना चाहिए। यदि 'यष्टिमान्' की तरह भेदमूलक व्यपदेश मानते हो तो द्रव्यमे 'द्रव्यत्ववान्' यह व्यपदेश होना चाहिए न कि 'द्रव्य' यह व्यपदेश। 'जिस प्रकार शुक्ल गुणके योगसे 'शुक्ल' पट.' इस प्रयोगमे 'मतुप्' प्रत्ययका लोप होकर अभेदमूलक प्रयोग होता है उसी तरह यहाँ भी 'द्रव्य' यह प्रयोग हो जायगा' यह समाधान ठीक नही है, क्योकि व्याकरण शास्त्रमे गुणवाची शब्दोसे 'मतुप्'का लोप स्वीकार किया गया है। शुक्ल आदि शब्द द्रव्यवाची और गुणवाची दोनो प्रकारके होते हैं, किन्तु 'द्रव्यत्व' शब्द गुणवाची नहीं है अत. इससे 'मतुप्' की निवृत्ति नहीं हो सकती। इसी तरह 'त्व' की निवृत्ति भी व्याकरणशास्त्रसे सिद्ध नहीं है अतः 'द्रव्य' यह व्यपदेश नही हो सकता।

§ ५. द्रव्य शब्दसे भावार्थक 'त्व' प्रत्यय भी नहीं हो सकता, क्योकि यदि भाव द्रव्यसे अभिन्न आत्मभूत अनादिपारिणामिक द्रव्यरूप ही है तो द्रव्यसे द्रव्यत्व भिन्न नहीं हुआ। ऐसी दशामे 'द्रव्यत्वके समवाय' की कल्पना समाप्त हो जाती है। यदि भिन्न है तो वह द्रव्यका भाव नही कहा जा सकता। किंच, जिस प्रकार द्रव्यका भाव द्रव्यत्व माना जाता है उसी तरह द्रव्यत्वका अन्य भाव यदि है तो 'द्रव्यत्वत्व' का प्रसग होनेपर अनवस्था हो जायगी। यदि नहीं है तो स्वभावशून्य होनेसे अभाव हो जायगा। जिस प्रकार 'अवेर्मांसम्' या 'अविकस्य मांसम्' दोनो विग्रहोमे 'अवि' शब्दसे ही प्रत्यय होता है उस तरह 'द्रव्यस्य भावः' और 'द्रव्यत्वस्य भाव' दोनो विग्रहोमे द्रव्य शब्दसे ही त्वप्रत्यय नही हो सकता, क्योकि जिस प्रकार अवि और अविक शब्द एकार्थक है उस प्रकार द्रव्य और द्रव्यत्व दोनो शब्द एकार्थक नहीं हैं। यहाँ विग्रह भेदसे अर्थभेदका होना अवश्यम्भावी है।

§ ६–८. यदि द्रव्यत्व नित्य एक और निरवयव है तो वह अनेक पृथिवी आदिमे कैसे रह सकता है? यदि रहता है तो रूपादिकी तरह अनेक ही हो जायगा। आकाश महापरिमाण-वाला है अत उसका एक साथ अनेक द्रव्योको व्याप्त करना बन जाता है, परन्तु द्रव्यत्वनामक

# तत्त्वार्थसूत्राणि-पाठभेदाश्च

| | | | |
|---|---|---|---|
| श्वे० | श्वेताम्बराम्नायीयपाठः | स० | सर्वार्थसिद्धिः |
| हा० | हारिभद्रीयवृत्तिः | रा० | राजवार्तिकम् |
| भा० | तत्त्वार्थभाष्यम् | श्लो० | श्लोकवार्तिकम् |
| सि०, सि०वृ० | सिद्धसेनीयावृत्तिः | पा० | पाठान्तरम् |
| | | वृ० | वृत्तिः |

---

## प्रथमोऽध्यायः

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥१॥
तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥२॥
तन्निसर्गादधिगमाद्वा ॥३॥
जीवाजीवा[1]स्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥४॥
नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥५॥
प्रमाणनयैरधिगमः ॥६॥
निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥७॥
सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥८॥
मतिश्रुतावधिमनः[2]पर्ययकेवलानि ज्ञानम् ॥९॥
तत्प्रमाणे ॥१०॥
[3]आद्ये परोक्षम् ॥११॥
प्रत्यक्षमन्यत् ॥१२॥
मतिः स्मृतिः सञ्ज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम् ॥१३॥
तदिन्द्रियानिन्द्रियनिमित्तम् ॥१४॥
अवग्रहेहावाय[4]धारणाः ॥१५॥
बहुबहुविधक्षिप्रानिः[5]सृतानुक्तध्रुवाणां सेतराणाम् ॥१६॥
अर्थस्य ॥१७॥
व्यञ्जनस्यावग्रहः ॥१८॥
न चक्षुरनिन्द्रियाभ्याम् ॥१९॥
श्रुत मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥२०॥
[6]भवप्रत्ययोऽवधिर्देवनारकाणाम् ॥२१॥
[7]क्षयोपशमनिमित्तः षड्विकल्पः शेषाणाम् ॥२२॥
ऋजुविपुलमती [8]मनःपर्ययः ॥२३॥
विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥२४॥
विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनः[9]पर्ययोः ॥२५॥
मतिश्रुतयोर्निबन्धो [10]द्रव्येष्वसर्वपर्यायेषु ॥२६॥
रूपिष्ववधेः ॥२७॥
तदनन्तभागे [11]मनःपर्ययस्य ॥२८॥
सर्वद्रव्यपर्यायेषु केवलस्य ॥२९॥
एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥३०॥
[12]मतिश्रुतावधयो विपर्ययश्च ॥३१॥
सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥३२॥
नैगमसङ्ग्रहव्यवहारर्जुसूत्र[13]शब्दसमभिरूढैवंभूता नयाः ॥३३॥

---

१ –वाश्रव–हा० । २ मन पर्याय–श्वे० ।
३ तत्राद्ये–हा० । ४ –हापाय–श्वे० ।
५ निश्चितासन्दिग्धध्रु–श्वे०। निसृतानुक्त ध्रु–श्लो० ।
–क्षिप्रनि सृतानुक्तध्रु–स० पा० ।
–क्षिप्रानिश्रितनुक्तध्रु–भा०, सि० वि० ।
–निश्चितानिश्चितध्रु–मि० वृ० पा० ।
६ द्विविधोऽवधि ॥२१॥ भवप्रत्ययो नारकदेवानाम् ॥२२॥ श्वे० । तत्र भवप्रत्ययो–सि० वृ० ।
७ यथोक्तनिमित्त श्वे० । ८ मन पर्याय श्वे० ।
९ मन पर्याययो श्वे०। १० सर्वद्रव्येष्वसर्व–श्वे०।
११ मन पर्यायस्य श्वे० ।
१२ मतिश्रुतविभङ्गा विप–हा० ।
१३ सूत्रशब्दा नया ॥३४॥ आद्यशब्दौ द्वित्रिभेदौ ॥३५॥ श्वे० ।

# द्वितीयोऽध्यायः

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥१॥

द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥२॥

सम्यक्त्वचारित्रे ॥३॥

ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥४॥

ज्ञानाज्ञान[1]दर्शनलब्धयश्चतुस्त्रित्रिपञ्चभेदाः[2] सम्यक्त्वचारित्रसंयमासंयमाश्च ॥५॥

गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्ध[3]लेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥६॥

जीवभव्या[4]भव्यत्वानि च ॥७॥

उपयोगो लक्षणम् ॥८॥

स द्विविधोऽष्टचतुर्भेदः ॥९॥

संसारिणो मुक्ताश्च ॥१०॥

समनस्काऽमनस्काः ॥११॥

संसारिणस्त्रसस्थावराः ॥१२॥

[5]पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ॥१३॥

[6]द्वीन्द्रियादयस्त्रसाः ॥१४॥

पञ्चेन्द्रियाणि ॥१५॥

द्विविधानि ॥१६॥

निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥१७॥

लब्ध्युपयोगौ भावेन्द्रियम्[7] ॥१८॥

स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥१९॥

स्पर्शरसगन्धवर्णशब्दास्तदर्थाः[8] ॥२०॥

श्रुतमनिन्द्रियस्य ॥२१॥

[9]वनस्पत्यन्तानामेकम् ॥२२॥

कृमिपिपीलिका[10]भ्रमरमनुष्यादीनामेकैकवृद्धानि[11] ॥२३॥

संज्ञिनः समनस्काः ॥२४॥

विग्रहगतौ कर्मयोगः ॥२५॥

अनुश्रेणि गतिः ॥२६॥

अविग्रहा जीवस्य ॥२७॥

विग्रहवती च संसारिणः प्राक् चतुर्भ्यः ॥२८॥

[12]एकसमयाऽविग्रहा ॥२९॥

[13]एकं द्वौ त्रीन्वाऽनाहारकः ॥३०॥

सम्मूर्च्छनगर्भोपपादा[14] जन्म ॥३१॥

सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥३२॥

[15]जरायुजाण्डजपोतानां गर्भः ॥३३॥

[16]देवनारकाणामुपपादः ॥३४॥

शेषाणां सम्मूर्च्छनम् ॥३५॥

औदारिकवै[17]क्रियिकाहारकतैजसकार्मणानि [18]शरीराणि ॥३६॥

[19]परं परं सूक्ष्मम् ॥३७॥

प्रदेशतोऽसंख्येयगुणं प्राक्तैजसात् ॥३८॥

अनन्तगुणे परे ॥३९॥

[20]अप्रतीघाते ॥४०॥

अनादिसंबन्धे च ॥४१॥

सर्वस्य ॥४२॥

तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः[21] ॥४३॥

निरुपभोगमन्त्यम् ॥४४॥

गर्भसम्मूर्च्छनजमाद्यम् ॥४६॥

[22]औपपादिकं वैक्रियिकम् ॥४६॥

लब्धिप्रत्ययं च ॥४७॥

---

१ –दर्शनदानादिलब्धयश्च–श्वे० ।

२ –दाः यथाक्रमं सम्यक्त्व–श्वे० ।

३ –द्धलेश्या–श्वे० । ४ भव्यत्वादीनि च श्वे० ।

५ पृथिव्यम्बुवनस्पतयः स्थावराः ॥१३॥ श्वे० ।

६ तेजोवायू द्वीन्द्रियादयश्च त्रसाः ॥१४॥ श्वे० ।

७ उपयोगः स्पर्शादिषु ॥१९॥ श्वे० ।

८ –तेषामर्थाः ॥२१॥ श्वे० ।

९ वाय्वन्तानामेकम् ॥२३॥ श्वे० ।

१० सिद्धसेनगणिन उल्लिखन्ति यत् केचित् मनुष्यपदमनार्षमित्यामनन्ति ।

११ सिद्धसेनगणिन लिखन्ति यत् केचित् एतदनन्तरम् 'अतीन्द्रियाः केवलिनः' इति सूत्रमपि पठन्ति ।

१२ एकसमयोऽविग्रहः ॥३०॥ श्वे० ।

१३ द्वौ वाऽनाहा–श्वे० । १४ –पपाता जन्म श्वे० ।

१५ जराय्वण्डपोतजानां गर्भः ॥३४॥ श्वे० । जरायुजाण्डपोतजानां–हा० ।

१६ नारकदेवानामुपपातः ॥३५॥ श्वे० ।

१७ वैक्रियाहा–श्वे० ।

१८ सिद्धसेनगणिनः कथयन्ति यत्–केचित् 'शरीराणि' इति पृथक्सूत्रं पठन्ति ।

१९ तेषां परं श्वे० । भाष्यटीकाकारः 'तेषाम्' इति पदं भाष्यवाक्यमामनन्ति ।

२० अप्रतिघाते श्वे० । २१ –कस्याचतुर्भ्यः श्वे० ।

२२ वैक्रियमौपपातिकम् ॥४७॥ श्वे० ।

तैजसमपि[1] ॥४८॥
शुभं विशुद्धमव्याघाति चाहा[2]रकं प्रमत्तसंयतस्यैव ॥४९॥
नारकसम्मूर्च्छिनो नपुंसकानि ॥५०॥
न देवाः ॥५१॥
[10]शेषास्त्रिवेदाः ॥५२॥
[11]औपपादिकचरमोत्तमदेहा[12]ऽसख्येयवर्षायुषोऽनपवर्त्यायुषः ॥५३॥

## तृतीयोऽध्यायः ।

रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभाभूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताऽधोऽधः[3]॥१॥
[4]तासु त्रिंशत्पञ्चविंशतिपञ्चदशदशत्रिपञ्चोनैकनरकशतसहस्राणि पञ्च चैव यथाक्रमम्॥२॥
[5]नारका नित्याऽशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥३॥
परस्परोदीरितदुःखाः ॥४॥
सक्लिष्टाऽसुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः ॥५॥
तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वानां परा स्थितिः ॥६॥
[6]जम्बूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ॥७॥
द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥८॥
तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीपः ॥९॥
[7]भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥१०॥
तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो [8]वर्षधरपर्वताः ॥११॥
[9]हेमार्जुनतपनीयवैडूर्यरजतहेममयाः ॥१२॥
मणिविचित्रपार्श्वा उपरि मूले च तुल्यविस्ताराः ॥१३॥
पद्ममहापद्मतिगिञ्छकेशरिमहापुण्डरीकपुण्डरीका ह्रदास्तेषामुपरि ॥१४॥
प्रथमो योजनसहस्रायामस्तदर्द्धविष्कम्भो ह्रदः ॥१५॥
दशयोजनावगाहः ॥१६॥
तन्मध्ये योजनं पुष्करम् ॥१७॥
तद्द्विगुणद्विगुणा ह्रदाः पुष्कराणि च ॥१८॥
तन्निवासिन्यो देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः ससामानिकपरिषत्काः ॥१९॥
गङ्गासिन्धुरोहिद्रोहितास्याहरिद्धरिकान्तासीतासीतोदानारीनरकान्तासुवर्णरूप्यकूलारक्तारक्तोदाः सरितस्तन्मध्यगाः ॥२०॥
द्वयोर्द्वयोः पूर्वाः पूर्वगाः ॥२१॥
शेषास्त्वपरगाः ॥२२॥
चतुर्दशनदीसहस्रपरिवृता गङ्गासिन्ध्वादयो नद्यः ॥२३॥
भरतः षड्विंशतिपञ्चयोजनशतविस्तारः षट्चैकोनविंशतिभागा योजनस्य ॥२४॥
तद्द्विगुणद्विगुणविस्तारा वर्षधरवर्षा विदेहान्ताः ॥२५॥
उत्तरा दक्षिणतुल्याः ॥२६॥
भरतैरावतयोर्वृद्धिह्रासौ षट्समयाभ्यामुत्सर्पिण्यवसर्पिणीभ्याम् ॥२७॥
ताभ्यामपरा भूमयोऽवस्थिताः ॥२८॥
एकद्वित्रिपल्योपमस्थितयो हैमवतकहारिवर्षकदैवकुरवकाः ॥२९॥
तथोत्तराः ॥३०॥
विदेहेषु संख्येयकालाः ॥३१॥

---

१ सूत्रमेतन्नास्ति श्वे० ।
२ –रक चतुर्दशपूर्वधरस्यैव ॥४८॥ श्वे० ।
३ –व पृथुतरा ॥१॥ श्वे० । "पृथुतरा इति केषाञ्चित् पाठः" रा० ।
४ तासु नरका ॥२॥ श्वे० ।
५ 'नारका' इति पदं नास्ति श्वे० । तेषु नारकानि सि० ।
६ लवणादय श्वे० । ७ तत्र भरतै–श्वे० ।
८ वंशधरपर्वता सि० ।
९ 'हेमार्जुन '।१२। इत्यादि भरतस्य विष्कम्भो ॥३२॥ इत्यन्त एकविंशतिसूत्राणि न सन्ति श्वे० ।
१० सूत्रमेतन्नास्ति श्वे० ।
११ औपपातिकचरमदेहोत्तमपुरुषाऽसं–श्वे० ।
१२ "चरमदेहा. इति वा पाठः"–स०, रा० ।

भरतस्य विष्कम्भो जम्बूद्वीपस्य नवतिशतभागः ॥३२॥
द्विर्धातकीखण्डे ॥३३॥
पुष्करार्द्धे च ॥३४॥
प्राङ्मानुषोत्तरान्मनुष्याः ॥३५॥
आर्या म्लेच्छाश्च[11] ॥३६॥
भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः । ३७॥
नृस्थिती परावरे[12] त्रिपल्योपमान्तर्मुहूर्त्ते ॥३८॥
तिर्यग्योनिजानां[13] च ॥३९॥

## चतुर्थोऽध्यायः

देवाश्चतुर्णिकायाः[1] ॥१॥
[2]आदितस्त्रिषु पीतान्तलेश्याः ॥२॥
दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥३॥
इन्द्रसामानिकत्रायस्त्रिंशत्पारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥४॥
[3]त्रायस्त्रिंशल्लोकपाल[4]वर्ज्या[5] व्यन्तरज्योतिष्काः ॥५॥
पूर्वयोर्द्वीन्द्राः[6] ॥६॥
कायप्रवीचारा आ ऐशानात् ॥७॥
शेषाः स्पर्शरूपशब्दमनःप्रवीचाराः[7] ॥८॥
परेऽप्रवीचाराः ॥९॥
भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥१०॥
व्यन्तराः किन्नरकिंपुरुषमहोरगग[8]न्धर्वयक्षराक्षसभूतपिशाचाः ॥११॥
ज्योतिष्काः [9]सूर्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च[10] ॥१२॥
मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥१३॥
तत्कृतः कालविभागः ॥१४॥
बहिरवस्थिताः ॥१५॥
वैमानिकाः ॥१६॥
कल्पोपपन्नाः कल्पातीताश्च ॥१७॥
उपर्युपरि ॥१८॥
सौधर्मैशानसानत्कुमार[14]माहेन्द्रब्रह्मब्रह्मोत्तरलान्तवकापिष्टशुक्रमहाशुक्र[15]शतारसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयन्तजयन्तापराजितेषु [16]सर्वार्थसिद्धौ च ॥१९॥
स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥२०॥
गतिशरीरपरिग्रहाभिमानतो हीनाः ॥२१॥
पीत[17]पद्मशुक्ललेश्या द्वित्रिशेषेषु ॥२२॥
प्राग्ग्रैवेयकेभ्यः कल्पाः ॥२३॥
ब्रह्मलोकालया[18] लौकान्तिकाः ॥२४॥
सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबा[19]धारिष्टाश्च ॥२५॥
विजयादिषु द्विचरमाः ॥२६॥
[20]औपपादिकमनुष्येभ्यः शेषास्तिर्यग्योनयः॥२७॥
[21]स्थितिरसुरनागसुपर्णद्वीपशेषाणां सागरोपमत्रिपल्योपमार्धहीनमिताः ॥२८॥

---

१ –श्चतुर्निकायाः श्वे० ।
२ तृतीयः पीतलेश्यः ॥२॥ श्वे० ।
३ त्रायस्त्रिंशपारिषद्या–श्वे० ।
४ त्रायस्त्रिंशलोक–श्वे० । ५ -वर्जा व्य–सि० ।
६ एतदनन्तरम् 'पीतान्तलेश्याः ॥७॥' इत्यधिकं सूत्रम् श्वे० ।
७ –प्रवीचारा द्वयोर्द्वयोः ॥९॥ श्वे० ।
८ –गान्धर्व–श्वे० । -गन्धर्व हा० ।
९ सूर्याश्चन्द्रमसो श्वे० ।
१० प्रकीर्णतारकश्च ॥१३॥ श्वे० । प्रकीर्णताराश्च हा० ।
११ आर्या म्लिशश्च हा० । १२ परापरे श्वे० ।
१३ तिर्यग्योनीनां च ॥१८॥ श्वे० ।
१४ –माहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारे श्वे० ।
१५ –सतार-श्वे० । १६ सर्वार्थसिद्धे च ॥२०॥ श्वे० ।
१७ 'पीतमिश्रपद्ममिश्रशुक्ललेश्या द्विद्विचतुश्चतुःशेषेषु' इति पाठान्तराश्रयणम् ।
१८ लोकान्ति–श्वे० ।
१९ –बाधमरुतोऽरिष्टाश्च ॥२६॥ श्वे० ।
२० औपपातिक –श्वे० ।
२१ स्थिति. ॥२९॥ भवनेषु दक्षिणार्धपतीनां पल्योपममध्यर्धम् ॥३०॥ शेषाणां पादोने ॥३१॥ असुरेन्द्रयोः सागरोपममधिकं च ॥३२॥ सौधर्मादिषु यथाक्रमम् ॥३३॥ सागरोपमे ॥३४॥ अधिके च ॥३५॥ एतानि सूत्राणि श्वे० ।

सौधर्मैशानयोः सागरोपमेऽधिके ॥२९॥
[1]सानत्कुमारमाहेन्द्रयोः सप्त ॥३०॥
[2]त्रिसप्तनवैकादशत्रयोदशपञ्चदशभिरधिकानि तु ॥३१॥
आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धौ च ॥३२॥
अपरा पल्योपममधिकम्[4] ॥३३॥
परतः परतः पूर्वा पूर्वाऽनन्तराः ॥३४॥
नारकाणां च द्वितीयादिषु ॥३५॥
दशवर्षसहस्राणि प्रथमायाम् ॥३६॥
भवनेषु च ॥३७॥
व्यन्तराणां च ॥३८॥
परा [10]पल्योपममधिकम् ॥३९॥
ज्योतिष्काणां च[11] ॥४०॥
[12]तदष्टभागोऽपरा ॥४१॥
लौकान्तिकानामष्टौ सागरोपमाणि सर्वेषाम्[13] ॥४२॥

## पञ्चमोऽध्यायः

अजीवकाया धर्माधर्माकाशपुद्गलाः ॥१॥
[5]द्रव्याणि ॥२॥
जीवाश्च ॥३॥
नित्यावस्थितान्यरूपाणि[6] ॥४॥
रूपिणः पुद्गलाः ॥५॥
आ [7]आकाशादेकद्रव्याणि ॥६॥
निष्क्रियाणि च ॥७॥
असंख्येयाः प्रदेशा धर्माधर्मैकजीवानाम् ॥८॥
आकाशस्यानन्ताः ॥९॥
संख्येयासंख्येयाश्च पुद्गलानाम् ॥१०॥
नाणोः ॥११॥
लोकाकाशेऽवगाहः ॥१२॥
धर्माधर्मयोः कृत्स्ने ॥१३॥
एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥१४॥
असंख्येयभागादिषु जीवानाम् ॥१५॥
[9]प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् ॥१६॥
गतिस्थित्युपग्रहौ[14] धर्माधर्मयोरुपकारः ॥१७॥
आकाशस्यावगाहः ॥१८॥
शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥१९॥
सुखदुःखजीवितमरणोपग्रहाश्च ॥२०॥
परस्परोपग्रहो जीवानाम् ॥२१॥
[15]वर्तनापरिणामक्रियाः परत्वापरत्वे च कालस्य ॥२२॥
स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥२३॥
शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्च ॥२४॥
अणवः स्कन्धाश्च ॥२५॥
[16]भेदसंघातेभ्य उत्पद्यन्ते ॥२६॥
भेदादणुः ॥२७॥
भेदसंघाताभ्यां चाक्षुषः[17] ॥२८॥
[18]सद्द्रव्यलक्षणम् ॥२९॥
उत्पादव्ययध्रौव्ययुक्तं सत् ॥३०॥
तद्भावाव्ययं नित्यम् ॥३१॥
अर्पितानर्पितसिद्धे ॥३२॥

---

१ सप्त सानत्कुमारे ॥३६॥
२ विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च ॥३७॥ श्वे० ।
३ –सर्वार्थसिद्धे च ॥३८॥ श्वे० ।
४ –कञ्च ॥३९॥ सागरोपमे ॥४०॥ अधिके च ॥४१॥ श्वे० ।
५ द्रव्याणि न जीवाश्च ॥२॥ श्वे० ।
६ सिद्धसेनगणिन कथयन्ति यत् केचित् 'नित्यावस्थितानि' इति सूत्रद्वयं पठन्ति । ते हि 'नित्यावस्थितारूपाणि' 'नित्यावस्थितान्यरूपाणि' इति पाठान्तरे अपि सूचयन्ति ।
७ आकाशादेक– श्वे० ।
८ धर्माधर्मयोः ॥७॥ जीवस्य ॥८॥
९ –विसर्गाभ्याम् श्वे० ।
१० –पल्योपमम् ॥४७॥ श्वे० ।
११ –ष्काणामधिकं ॥४८॥ ग्रहाणामेकम् ॥४९॥ नक्षत्राणामर्धम् ॥५०॥ तारकाणां चतुर्भाग ॥५१॥ श्वे० ।
१२ जघन्या त्वष्टभाग ॥५२॥ चतुर्भाग शेषाणाम् ॥५३॥ श्वे० ।
१३ सूत्रमेतन्नास्ति श्वे० । त० श्लोकवार्तिकेऽपि नास्ति एतत्सूत्रम् ।
१४ –पग्रहो श्वे० ।
१५ वर्तना परिणाम क्रिया परत्वापरत्वे श्वे० ।
१६ संघातभेदेभ्य श्वे० ।
१७ चाक्षुषा ॥२८॥ श्वे० ।
१८ सूत्रमेतन्नास्ति श्वे० ।

स्निग्धरूक्षत्वाद् बन्धः ॥३३॥
न जघन्यगुणानाम् ॥३४॥
गुणसाम्ये सदृशानाम् ॥३५॥
द्व्यधिकादिगुणानां तु ॥३६॥
[1]बन्धेऽधिकौ पारिणामिकौ च ॥३७॥
[7]गुणपर्ययवद् द्रव्यम् ॥३८॥
कालश्च[8] ॥३९॥
सोऽनन्तसमयः ॥४०॥
द्रव्याश्रया निर्गुणा गुणाः ॥४१॥
तद्भावः परिणामः[9] ॥४२॥

## षष्ठोऽध्यायः

कायवाङ्मनःकर्म योगः ॥१॥
स आस्रवः ॥२॥
[2]शुभः पुण्यस्याशुभः पापस्य ॥३॥
सकषायाकषाययोः साम्परायिकेर्यापथयोः ॥४॥
[3]इन्द्रियकषायाव्रतक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसंख्याः पूर्वस्य भेदाः ॥५॥
तीव्रमन्दज्ञाताज्ञात[4]भावाधिकरणवीर्यविशेषेभ्यस्तद्विशेषः ॥६॥
अधिकरणं जीवाजीवाः ॥७॥
आद्यं संरम्भसमारम्भारम्भयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥८॥
निवर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥९॥
तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥१०॥
दुःखशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थानान्यसद्वेद्यस्य ॥११॥
[5]भूतव्रत्यनुकम्पादानसरागसंयमादियोगः क्षान्तिः शौचमिति सद्वेद्यस्य ॥१२॥
केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य ॥१३॥
कषायोदयात्ती[6]व्रपरिणामश्चारित्रमोहस्य ॥१४॥
बह्वारम्भपरिग्रहत्वं[10] नारकस्यायुषः ॥१५॥
माया तैर्यग्योनस्य ॥१६॥
[11]अल्पारम्भपरिग्रहत्वं मानुषस्य ॥१७॥
स्वभावमार्दवं च ॥१८॥
निःशील[12]व्रतित्वं च सर्वेषाम् ॥१९॥
सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि दैवस्य ॥२०॥
सम्यक्त्वं च ॥२१॥
योगवक्रता विसंवादनं चाशुभस्य नाम्नः ॥२२॥
तद्विपरीतं[13] शुभस्य ॥२३॥
दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतीचारोऽभीक्ष्ण[14]ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी[15] साधुसमाधिर्वैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकरत्वस्य[16] ॥२४॥
परात्मनिन्दाप्रशंसे [17]सदसद्गुणोच्छादनोद्भावने च नीचैर्गोत्रस्य ॥२५॥
तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥२६॥
विघ्नकरणमन्तरायस्य ॥२७॥

---

१ बन्धे समाधिकौ पारिणामिकौ ॥३६॥ श्वे० । 'च' नास्ति स० श्लो० ।
२ शुभः पुण्यस्य ॥३॥ अशुभः पापस्य ॥४॥ श्वे० । 'शुभः पुण्यस्य । शेषं पापम्' हा० ।
३ अव्रतकषायेन्द्रियक्रियाः श्वे० । इन्द्रियकषायाव्रतक्रियाः हा०, सि० ।
४ –भाववीर्याधिकरणविशे– श्वे० ।
५ भूतव्रत्यनुकम्पा दानं सरागसंयमादि योग – श्वे० ।
६ –त्तीव्रात्मपरिणाम– श्वे० ।
७ गुणपर्याय– श्वे० ।
८ कालश्चेत्येके ॥३८॥ श्वे० ।
९ एतदनन्तरम् 'अनादिरादिमांश्च ॥४२॥ रूपादिष्वादिमान् ॥४३॥ योगोपयोगौ जीवेषु ॥४४॥– एतानि सूत्राणि अधिकानि श्वे० ।
१० –त्वं च नारक– श्वे० ।
११ अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं च मानुषस्य ॥१८॥– श्वे० ।
१२ –व्रतत्वं– श्वे० । १३ विपरीतं श्वे० ।
१४ भीक्ष्णज्ञानो– श्वे० । १५–सी संघसाधु– श्वे० ।
१६ तीर्थकृत्त्वस्य ॥२३॥ श्वे० ।
१७ सदसद्गुणाच्छादनो– श्वे० । सदसद्गुणोच्छा– स० । सदसद्गुणच्छा– रा०, श्लो०, सि० ।

## सप्तमोऽध्यायः

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥१॥
देशसर्वतोऽणुमहती ॥२॥
तत्स्थैर्यार्थं भावनाः पञ्च पञ्च ॥३॥
[1]वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकितपानभोजनानि पञ्च ॥४॥
क्रोधलोभभीरुत्वहास्यप्रत्याख्यानान्यनुवीचिभाषणं च पञ्च ॥५॥
शून्यागारविमोचितावासपरोपरोधाकरणभैक्ष्यशुद्धिसधर्माविसंवादाः पञ्च ॥६॥
स्त्रीरागकथाश्रवणतन्मनोहराङ्गनिरीक्षणपूर्वरतानुस्मरणवृष्येष्टरसस्वशरीरसंस्कारत्यागाः पञ्च ॥७॥
मनोज्ञामनोज्ञेन्द्रियविषयरागद्वेषवर्जनानि पञ्च ॥८॥
हिंसादिष्विहामुत्रा[2]पायावद्यदर्शनम् ॥९॥
दुःखमेव वा[3] ॥१०॥
मैत्रीप्रमोदकारुण्यमाध्यस्थ्या[4]नि च सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु ॥११॥
जगत्कायस्वभावौ[5] वा संवेगवैराग्यार्थम् ॥१२॥
प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा ॥१३॥
असदभिधानमनृतम् ॥१४॥
अदत्तादानं स्तेयम् ॥१५॥
मैथुनमब्रह्म ॥१६॥
मूर्च्छा परिग्रहः ॥१७॥
निःशल्यो व्रती ॥१८॥
अगार्यनगारश्च ॥१९॥
अणुव्रतोऽगारी ॥२०॥
दिग्देशानर्थदण्डविरतिसामायिक[6]प्रोषधोपवासोपभोगपरिभोग[7]परिमाणातिथिसंविभागव्रतसम्पन्नश्च ॥२१॥
मारणान्तिकीं सल्लेखनां[8] जोषिता ॥२२॥
शङ्काकाङ्क्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतीचाराः[9] ॥२३॥
व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥२४॥
[10]बन्धवधच्छेदातिभारारोपणान्नपाननिरोधाः ॥२५॥
मिथ्योपदेशरहो[11]भ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदाः ॥२६॥
स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥२७॥
परविवाहकरणेत्व[12]रिकापरिगृहीतापरिगृहीतागमनानङ्गक्रीडाकामतीव्राभिनिवेशाः ॥२८॥
क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः ॥२९॥
ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्त[13]राधानानि ॥३०॥
[14]आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः[15] ॥३१॥
कन्दर्पकौत्कु[16]च्यमौखर्यासमीक्ष्याधिकरणोपभो[17]गपरिभोगानर्थक्यानि ॥३२॥
योगदुःप्रणिधानानादर[18]स्मृत्यनुपस्थानानि ॥३३॥

---

१ 'वाङ्मनो' इत्यादि पञ्चसूत्राणि न सन्ति श्वे०।
२ –मुत्र चापायावद्य– श्वे०।
३ सिद्धसेनगणिनः सूत्रयन्ति यत् केचित् 'व्याधिप्रतीकारत्वात् कण्डूपरिगतत्वाच्चाब्रह्म, तथा परिग्रहेष्वप्राप्तप्राप्तनष्टेषु काङ्क्षाशोकौ प्राप्तेषु च रक्षणमुपभोगे वाऽवितृप्ति' एतयोः भाष्यवाक्ययोः पृथक् सूत्रत्वमामनन्ति।
४ –माध्यस्थानि च श्वे०।
५ –वौ च संवेग– श्वे०।
६ –पौषधो–श्वे०।
७ –परिभोगातिथि–भा०। सि०।
८ संलेखनां श्वे०। ९ –रतिचाराः श्वे०।
१० बन्धवधच्छविच्छेद– श्वे०।
११ रहस्याभ्याख्यान– श्वे०।
१२ –त्वरपरिगृहीतापरिगृहीतागमनानङ्गक्रीडातीव्रकामाः– श्वे०। सिद्धसेनगणिनः 'परविवाहकरणम् इत्वरिकागमनं परिगृहीतागमनम् अनङ्गक्रीडा तीव्रकामाभिनिवेशः' इति सूत्रपाठान्तरं सूत्रयन्ति।
१३ स्मृत्यन्तर्धानानि श्वे०।
१४ आनायन– हा० पाठान्तरसूचनम्।
१५ –पुद्गलप्रक्षेपाः ॥२६॥ भा०।
१६ –कौकुच्य– भा० हा०।
१७ –करणोपभोगाधिकत्वानि ॥२७॥ श्वे०।
१८ –स्मृत्यनुपस्थापनानि ॥२८॥

[1]अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादा[2]नसंस्तरोपक्रमणानादरस्मृत्यनुपस्थानानि ॥३४॥
सचित्तसंवन्ध[3]सम्मिश्राभिषवदुःपक्वाहाराः॥३५॥
सचित्तनिक्षेपापि[4]धानपरव्यपदेशमात्सर्य्यकालातिक्रमाः ॥३६॥
जीवितमरणाशंसामित्रानुरागसुखानुवन्ध[11]निदानानि ॥३७॥
अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥३८॥
विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥३९॥

## अष्टमोऽध्यायः

मिथ्यादर्शनाविरतिप्रमादकपाययोगा वन्धहेतवः ॥१॥
सकपायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते[5] स वन्धः ॥२॥
प्रकृतिस्थित्यनुभाग[6]प्रदेशास्तद्विधयः ॥३॥
आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायु[7]र्नामगोत्रान्तरायाः ॥४॥
पञ्चनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चभेदा[8] यथाक्रमम् ॥५॥
[9]मतिश्रुतावधिमनःपर्ययकेवलानाम् ॥६॥
चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धयश्च[10] ॥७॥
सदसद्वेद्ये ॥८॥
[11]दर्शनचारित्रमोहनीयाकपायकपायवेदनीयाख्यास्त्रिद्विनवषोडशभेदाः सम्यक्त्वमिथ्यात्वतदुभयान्यकपायकपायौ हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदा अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसञ्ज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः ॥९॥
नारकतैर्यग्योनमानुषदैवानि ॥१०॥
गतिजातिशरीराङ्गोपाङ्गनिर्माणवन्धनसंघातसंस्थानसंहननस्पर्शरसगन्धवर्णानुपूर्व्यगुरु[13]लघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययशःकीर्तिसेतराणि तीर्थकरत्व च[14] ॥११॥
उच्चैर्नीचैश्च ॥१२॥
[15]दानलाभभोगोपभोगवीर्याणाम् ॥१३॥
आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥१४॥
सप्ततिर्मोहनीयस्य ॥१५॥
[16]विंशतिर्नामगोत्रयोः ॥१६॥
त्रयस्त्रिंशत्सागरोपमाण्यायुषः[17] ॥१७॥
अपरा द्वादशमुहूर्ता वेदनीयस्य ॥१८॥
नामगोत्रयोरष्टौ ॥१९॥
शेषाणामन्तर्मुहूर्ता[18] ॥२०॥
विपाकोऽनुभवः[19] ॥२१॥
स यथानाम ॥२२॥
ततश्च निर्जरा ॥२३॥
नामप्रत्ययाः सर्वतो योगविशेषात् सूक्ष्मैकक्षेत्रा[20]-

१ अप्रत्युपेक्षि- हा० ।
२ -दाननिक्षेपसंस्तारोपक्रमणानादरस्मृत्यनुपस्थापनानि ॥२९॥ श्वे० ।
३ सचित्तसम्बद्धस- श्वे० ।
४ निक्षेपपिधान- श्वे० ।
५ -दत्ते ॥२॥ सम्बन्ध. ॥३॥ श्वे० ।
६ -भावप्रदेशा- श्वे० ।
७ -यायुष्कनाम- । ८ भेदो रा० ।
९ मत्यादीनाम् ॥७॥ श्वे० ।
१० -स्त्यानगृद्धिवेदनीयानि च ॥८॥ श्वे० । स्त्यानर्द्धिरिति वा पाठ.'-सि० ।
११ दर्शनचारित्रमोहनीयकपायनोकपायवेदनीयाख्यास्त्रिद्विपोडशनवभेदाः सम्यक्त्वमिथ्यात्वतदुभयानि कपायनोकपायावनन्तानुवन्ध्यप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभा. हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदाः ॥१०॥ श्वे० ।
१२ निदानकरणानि ॥३२॥ श्वे० ।
१३ -पूर्व्यागुरु- श्वे० ।
१४ -देययशांसि सेतराणि तीर्थकृत्त्वं च ॥१२॥ श्वे० ।
१५ दानादीनाम् ॥१४॥ श्वे० ।
१६ नामगोत्रयोर्विंशति' ॥१७॥ श्वे० ।
१७ -स्यायुष्कस्य- श्वे० ।
१८ -मन्तर्मुहूर्तम् ॥२०॥ श्वे० । १९ -नुभाव' श्वे० ।
२० गाढस्थिताः श्वे० ।

वगाहस्थिताः सर्वात्मप्रदेशेष्वनन्तानन्त-प्रदेशाः ॥२४॥

[8]सद्वेद्यशुभायुर्नामगोत्राणि पुण्यम् ॥२५॥

[9]अतोऽन्यत्पापम् ॥२६॥

## नवमोऽध्यायः

आस्रवनिरोधः संवरः ॥१॥

स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥२॥

तपसा निर्जरा च ॥३॥

सम्यग्योगनिग्रहो गुप्तिः ॥४॥

ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥५॥

[1]उत्तमक्षमामार्दवार्जवशौचसत्यसयमतपस्त्यागाकिञ्चन्यब्रह्मचर्याणि धर्माः ॥६॥

अनित्याशरणसंसारैकत्वान्यत्वा[2]शुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्यातत्वानुचिन्तनमनुप्रेक्षाः[3] ॥७॥

मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥८॥

क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाञ्चालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानदर्शनानि[4] ॥९॥

[5]सूक्ष्मसाम्परायछद्मस्थवीतरागयोश्चतुर्दश ॥१०॥

एकादश जिने ॥११॥

[6]बादरसाम्पराये सर्वे ॥१२॥

ज्ञानावरणे प्रज्ञाज्ञाने ॥१३॥

दर्शनमोहान्तराययोरदर्शनालाभौ ॥१४॥

चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाञ्चासत्कारपुरस्काराः ॥१५॥

वेदनीये शेषाः ॥१६॥

एकादयो भाज्या युगपदेकस्मिन्नैकोनविंशतेः[7] ॥१७॥

सामायिकच्छेदोप[10]स्थापनापरिहारविशुद्धिसूक्ष्मसाम्परायथा[11]ख्यातमिति चारित्रम् ॥१८॥

अनशनाव[12]मोदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥१९॥

प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥२०॥

नवचतुर्दशपञ्चद्विभेदा[13] यथाक्रमं प्राग्ध्यानात् ॥२१॥

आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनाः[14] ॥२२॥

ज्ञानदर्शनचारित्रोपचाराः ॥२३॥

आचार्योपाध्यायतपस्विशैक्ष्य[15]ग्लानगणकुलसंघसाधुमनोज्ञानाम्[16] ॥२४॥

वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशाः ॥२५॥

बाह्याभ्यन्तरोपध्योः ॥२६॥

उत्तमसंहननस्यैकाग्रचिन्तानिरोधो [17]ध्यानमान्तर्मुहूर्तात् ॥२७॥

आर्त्तरौद्रधर्म्य[18]शुक्लानि ॥२८॥

परे मोक्षहेतू ॥२९॥

आर्त्तममनोज्ञस्य[19] सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥३०॥

विपरीतं मनोज्ञस्य[20] ॥३१॥

---

१ उत्तम. क्षमा' 'धर्म ॥६॥ श्वे० ।

२ –शुचित्वास्रव– श्वे० ।

३ "अपरे पठन्ति अनुप्रेक्षा इति अनुप्रेक्षितव्या इत्यर्थः । अपरे अनुप्रेक्षाशब्दमेकवचनान्तमधीयते"– सि० वृ० ।

४ प्रज्ञाज्ञानसम्यक्त्वानि ।– हा० ।

५ सूक्ष्मसम्पराय– श्वे० ।

६ बादरसाम्पराये श्वे० ।

७ –देकान्नविंशतेः हा० । युगपदेकोनविंशतेः ॥१७॥ श्वे० ।

८ सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् ॥२६॥ श्वे० ।

९ सूत्रमेतन्नास्ति श्वे० ।

१० –दोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातानि चारित्रम् । श्वे० ।

११ अथाख्यात– सि० रा० ।

१२ –वमौदर्य– । श्वे० । १३ द्विभेदं यथा– श्वे० ।

१४ –पस्थापनानि ॥२२॥ श्वे० । १५ –शैक्ष– श्वे० ।

१६ –साधुसमनोज्ञानाम् ॥१४॥ श्वे० ।

१७ –ध्यानम् ॥२७॥ आमुहूर्तात् ॥२८॥ श्वे० ।

१८ –धर्म– श्वे० । १९ –ममनोज्ञानां सम्प्र– श्वे० ।

२० –हारः ॥३१॥ वेदनायाश्च ॥३१॥ विपरीतं मनोज्ञानाम् ॥३२॥ श्वे० ।

वेदनायाश्च ॥३२॥
निदानं च ॥३३॥
तदविरतदेशविरतप्रमत्तसयतानाम् ॥३४॥
हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥३५॥
आज्ञापायविपाकसंस्थानविचयाय धर्म्यम्[1] ॥३६॥
शुक्ले चाद्ये पूर्वविदः ॥३७॥
परे केवलिनः ॥३८॥
पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्तीनि[2] ॥३९॥
[3]त्र्येकयोगकाययोगायोगानाम् ॥४०॥
एकाश्रये [6]सवितर्कवीचारे पूर्वे ॥४१॥
[7]अवीचारं द्वितीयम् ॥४२॥
वितर्कः श्रुतम् ॥४३॥
[8]वीचारोऽर्थव्यञ्जनयोगसंक्रान्तिः ॥४४॥
सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपशमकोपशान्तमोहक्षपकक्षीणमोहजिनाः क्रमशोऽसंख्येयगुणनिर्जराः ॥४५॥
पुलाकवकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्थाः ॥४६॥
संयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपा[9]दस्थानविकल्पतः साध्याः ॥४७॥

## दशमोऽध्यायः

मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥१॥
वन्धहेत्वभावनिर्जराभ्यां[4] कृत्स्नकर्मविप्रमोक्षो मोक्षः ॥२॥
[5]औपशमिकादिभव्यत्वानां च ॥३॥
अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥४॥
तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥५॥
पूर्वप्रयोगादसङ्गत्वाद् वन्धच्छेदात्तथागतिपरिणामाच्च[10] ॥६॥
[11]आविद्धकुलालचक्रवद्व्यपगतलेपालाबुवदेरण्डबीजवदग्निशिखावच्च ॥७॥
[12]धर्मास्तिकायाभावात् ॥८॥
क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनान्तरसंख्याल्पबहुत्वतः साध्याः ॥९॥

---

१ –धर्ममप्रमत्तसंयतस्य ॥३७॥ उपशान्तक्षीणकषाययोश्च ॥३९॥ शुक्ले·· श्वे० ।
२ –निवृत्तीनि ॥४१॥ श्वे० ।
३ तत्त्र्येककाययोगायोगानाम् ॥४२॥ श्वे० ।
४ –राभ्याम् ॥२॥ कृत्स्नकर्मक्षयो मोक्षः ॥३॥ श्वे० ।
५ औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवल··
६ सवितर्कवीचारे पूर्वे ॥४३॥ श्वे० ।
७ –अविचारं श्वे० । ८ विचारो– श्वे० ।
९ –पपातस्थान– श्वे० ।
१० –माच्च तद्गतिः ॥६॥ श्वे० ।
११ सूत्रमेतन्नास्ति श्वे० ।
१२ सूत्रमेतन्नास्ति श्वे० ।

# तत्त्वार्थसूत्राणामकारादिकोशः

# तत्त्वार्थसूत्रस्थशब्दानामकाराद्यनुक्रमः

# अवतरण-सूची

## ग्रन्था ग्रन्थकाराश्च

# भौगोलिकशब्द-सूची

# तत्त्वार्थवार्तिकगता विशिष्टाः शब्दाः

# मूल-टिप्पण्युपयुक्तग्रन्थसङ्केत-विवरणम्

अङ्गप०—अङ्गपण्णत्ती
अभिध०—अभिधर्मकोश [ज्ञानमण्डल प्रेस, काशी]
अभिधानचि०—अभिधानचिन्तामणि
अभिध० टी०—अभिधर्मकोश टीका [ज्ञानमण्डल प्रेस, काशी]
अभि० व्या०—अभिधर्मकोश व्याख्या
अमर०—अमरकोश
आप्तमी०—आप्तमीमांसा [जैनसिद्धान्तप्रकाशिनी संस्था, कलकत्ता]
आव० नि०—आवश्यकनिर्युक्ति [आगमोदय समिति, सूरत]
उणादि०—उणादि प्रकरण । जैनेन्द्र व्याकरणान्तर्गत ।
ऋग्०—ऋग्वेद [आनन्दाश्रम सीरिज, पूना]
खुद्दा०—खुद्दाबन्ध षट्खण्डागमनान्तर्गत ।
गरुडपु०—गरुडपुराण [निर्णयसागर]
गो० जीव०, गो० जी०—गोम्मटसार, जीवकाण्ड [रायचन्द्रशास्त्रमाला बम्बई]
चतुःश०—चतुःशतकम् [विश्वभारती ग्रन्थमाला, शान्तिनिकेतन]
छक्खं० वग्ग०—षट्खण्डागम वर्गणा खण्ड [जैन साहित्योद्धारक फण्ड, भेलसा]
जयध०—जयधवलाटीका [दि० जैनसंघ, मथुरा]
जैनेन्द्र०—जैनेन्द्रव्याकरण [भारतीय ज्ञानपीठ, काशी]
जैनेन्द्रवा०—जैनेन्द्रमहावृत्ति वार्तिक, [भारतीय ज्ञानपीठ, काशी]
तत्त्वसं०—तत्त्वसंग्रह [गायकवाड सीरिज, बडौदा]
त० भा०—तत्त्वार्थभाष्य [देवचन्द्र लालभाई, सूरत]
त० सू०—तत्त्वार्थसूत्र [सर्वार्थसिद्धि सम्मत सूत्रपाठान्वितम्]
तत्त्वाधि०—तत्त्वार्थाधिगमसूत्र [तत्त्वार्थभाष्य सम्मत सूत्रपाठ]
तत्त्वोप०—तत्त्वोपप्लवसिंह [गायकवाडसीरिज, बडौदा]
ति० प०—तिलोयपण्णत्ती [जैनसंस्कृति संरक्षकसंघ, सोलापुर]
ध० टी० भावा०—धवलाटीका भावानुयोग [जैन-साहित्योद्धारक फण्ड, भेलसा]
ध० टी० सं०—धवलाटीका सतपयपरूवणा [जैन-साहित्योद्धारक फण्ड, भेलसा]
न्यायकुमु०—न्यायकुमुदचन्द्रः [माणिकचन्द्र दि० जैन ग्रन्थमाला, बम्बई]
न्यायसू०—न्यायसूत्रम् । [वैंकटेश्वर प्रेस, बबई]
पञ्चसं०—पञ्चसंग्रहः [पं० परमानन्द संस्कः, वीरसेवामन्दिर, दिल्ली]
पञ्चास्ति०, पञ्चा०—पञ्चास्तिकाय [रायचन्द्र ग्रन्थमाला, बम्बई]
पाणिनिशि०—पाणिनिशिक्षा । [चौखम्बा सीरिज, काशी]
पा० सू०—पाणिनि व्याकरणम् । [चौखम्बा सीरिज, काशी]
पा० वा०, पा० सू० वा० } पाणिनि व्याकरणम्, वार्तिकम् [चौखम्बा सीरिज, काशी]
पात० महा०—पातञ्जलमहाभाष्यम् [चौखम्बा सीरिज, काशी]
पात० महा० पस्पशा०—पातञ्जलमहाभाष्यम्, पस्पशाह्निकम् [चौखम्बा सीरिज, काशी]
पात० महा० प्रत्याहा०—पातञ्जलमहाभाष्यम्, प्रत्याहारसूत्रम् [चौखम्बा सीरिज, काशी]
प्रमाणवा०—प्रमाणवार्तिकम् [बिहार-उडीसा रिसर्च सोसाइटी, पटना]
प्रमाणवार्तिकाल०—प्रमाणवार्तिकालङ्कार. [बिहार-उडीसा रिसर्च सोसाइटी, पटना]
प्रमाणसमु०—प्रमाणसमुच्चय [मैसूर यूनिवर्सिटी सीरिज]
प्रवचनसा०—प्रवचनसार [रायचन्द्रशास्त्रमाला, बम्बई]
प्रश० भा०—प्रशस्तपादभाष्यम् [विजयनगर सीरिज, काशी]
प्रशस० व्यो०—प्रशस्तपादभाष्यस्य व्योमवती टीका [चौखम्बा संस्कृत सीरिज, काशी]
प्र० स० टी०—प्रमाणसमुच्चयटीका [मैसूर यूनि० सीरिज]

ब्रह्मसू० शा० भा०—ब्रह्मसूत्रशाङ्करभाष्यम् [निर्णयसागर प्रेस, बम्बई]
भग० आरा०—भगवती आराधना [कल्याण प्रेस, सोलापुर]
भग० गी०—भगवद्गीता [आनन्दाश्रम, पूना]
भग० सू०—भगवतीसूत्रम् [गुजरात पुरातत्त्वमन्दिर, अहमदाबाद]
मध्यान्त० सू० टी०—मध्यान्तविभागसूत्रटीका [शान्तिनिकेतन]
मनु०—मनुस्मृतिः [निर्णयसागर, बम्बई]
महाभा०—महाभाष्यम् [चौखम्बा सीरिज, काशी]
माध्यमकवृ०—माध्यमिकवृत्ति [बिब्लोथिका बुद्धिका, रशिया]
माध्यमका०—माध्यमकावतारः
मी० द०—मीमांसादर्शनम् [आनन्दाश्रम, पूना]
मी० श्लो० शब्दनि०—मीमांसाश्लोकवार्तिकम् [चौखम्बा सीरिज, काशी]
मूलाचा०—मूलाचारः [माणिकचन्द्र ग्रन्थमाला, बम्बई]
मैत्रा०—मैत्राण्युपनिषद् [निर्णयसागर, बम्बई]
युक्त्यनु०—युक्त्यनुशासनम् [माणिकचन्द्र-ग्रन्थमाला, बम्बई]
योगभा०—योगसूत्र व्यासभाष्यम् [चौखम्बा सीरिज, काशी]
योगसू०—योगसूत्रम् [चौखम्बा सीरिज, काशी]
रत्नक०—रत्नकरण्डश्रावकाचारः [माणिकचन्द्र ग्रन्थमाला, बम्बई]
वाक्यप०—वाक्यपदीयम् [चौखम्बा सीरिज, काशी]
वैशे०—वैशेषिकसूत्रम् [चौखम्बा सीरिज, काशी]
वैशे० उप०—वैशेषिकसूत्रोपस्कार [चौखम्बा सीरिज, काशी]
व्याख्याप्रज्ञ० अभ०—व्याख्याप्रज्ञप्ति अभयदेवीया टीका [शारदामुद्रण, अहमदाबाद]
श० च०—शब्दार्णवचन्द्रिका [जैनसिद्धान्तप्रकाशिनी संस्था, कलकत्ता]

शा०
शाक०
शाकटा० } शाकटायनव्याकरणम् [लाजरस प्रेस, काशी]
शिक्षासमु०—शिक्षासमुच्चयः [बिब्लोथिका बुद्धिका, रशिया]
षट्खं०—षट्खण्डागमः [जैनसाहित्योद्धारक फण्ड, भेलसा]
सन्ताना० सि०—सन्तानान्तरसिद्धिः [राहुल सांकृत्यायनसत्का]
सन्मति०—सन्मतितर्कटीका [गुजरात पुरातत्त्वमंदिर, अहमदाबाद]
सर्वार्थसि०
स० सि० } सर्वार्थसिद्धिः [सोलापुर]
सांख्यका०—सांख्यकारिका [चौखम्बा सीरिज, काशी]
सिद्धि० द्वा०—सिद्धसेनद्वात्रिंशिका [भावनगर]
सिद्धिवि०—सिद्धिविनिश्चयटीका [सम्पादकसत्का]
स्फु० अभि०
स्फुटार्थ० अभिध० } स्फुटार्था अभिधर्मकोशव्याख्या। [बिब्लोथिका बुद्धिका रशिया]
हेतुबि० टी०—हेतुबिन्दुटीका [बड़ौदा सीरिज]
आ०—आराके जैनसिद्धान्तभवन की लिखित प्रति।
का०—कारिका
गा०—गाथा
ज०—जयपुरके भंडारकी प्रति
ता०—ताडपत्रीय प्रति ऐलकपन्नालाल सरस्वतीभवन ब्यावर।
द०—दिल्लीके पंचायती जैनमन्दिरकी प्रति।
ब०—बनारस स्याद्वादविद्यालयकी प्रति।
भा० १—भाण्डारकर इन्स्टीट्यूट पूनाकी प्रथम प्रति के पाठांतर डॉ० जगदीशचन्द्रजैन द्वारा संगृहीत।
भा० २—भाण्डारकर इन्स्टीट्यूट पूनाकी द्वितीय प्रति के पाठांतर डॉ० जगदीशचन्द्रजैन द्वारा संगृहीत।
मु०—मुद्रित प्रति—जैनसिद्धान्त प्रकाशिनी संस्था, कलकत्ता।
मू०—मूडबिद्री भंडारकी ताडपत्रीय प्रति।
सम्पा०—सम्पादककृत टिप्पणी।
श्र०—श्रवणबेलगोला मठकी ताडपत्रीय प्रति।
श्र० टि०—श्रवणबेलगोला मठकी ताडपत्रीय प्रतिके टिप्पण।
श्लो०—श्लोक।